किमपि विगणयन्तो बुद्धिमन्तः सहन्ते ॥४०॥

अन्यच्च। बलवन्तं रिपुं दृष्ट्वा देशत्यागं करोति यः।
युधिष्ठिर इवाप्नोति पुनर्जीवन् स मेदिनीं ॥४१॥

युध्यते ऽहङ्कृतिं कृत्वा दुर्बलो यो बलीयसा।
स तस्य वाञ्छितं कुर्यादात्मनश्च कुलक्षयं ॥४२॥

तद्बलवताभियुक्तस्यापसरणसमयो ऽयं न सन्धेर्विग्रहस्य च। एवमनुजीविमन्त्री ऽपसरणस्य। अथ तस्य वाक्यं समाकर्ण्य प्रजीविनमाह। भद्र त्वमप्यात्मनो ऽभिप्रायं वद। सो ऽब्रवीत्। देव मम सन्धिविग्रहयानानि त्रीण्यपि न प्रतिभान्ति। विशेषतश्चासनं प्रतिभाति। उक्तं च यतः।

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति।
स एव प्रच्युतः स्थानाच्छुनापि परिभूयते ॥४३॥

अन्यच्च। अभियुक्तो बलवता दुर्गे तिष्ठेत् प्रयत्नवान्।
तत्रस्थः सुहृदाह्वानं प्रकुर्वीतात्ममुक्तये ॥४४॥

यो रिपोरागमं श्रुत्वा भयसन्त्रस्तमानसः।
स्वस्थानं सन्त्यजेत् तत्र न स भूयो वसेन्नरः ॥४५॥

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
स्थानहीनस्तथा राजा गम्यः स्यात् सर्वजन्तुषु ॥४६॥

निजस्थानस्थितो ऽप्येकः शतं योद्धुं सहेन्नरः।
शक्तानामपि शत्रूणां तस्मात् स्थानं न सन्त्यजेत् ॥४७॥

तस्माद्दुर्गं दृढं कृत्वा सुभटासारसंयुतं।
प्राकारपरिखायुक्तं शस्त्रादिभिरलङ्कृतं ॥४८॥

तिष्ठ मध्यगतो नित्यं युद्धाय कृतनिश्चयः।
जीवन् सम्प्राप्स्यसि क्ष्मां त्वं मृतो वा स्वर्गमेष्यसि॥४९॥

अन्यच्च। बलिनापि न बध्यन्ते लघवो ऽप्येकसंश्रयाः।

विपक्षेणापि मरुता यथैकस्थानवीरुधः ॥५०॥
महानप्येकको वृक्षः सर्वतः सुप्रतिष्ठितः ।
प्रसह्यैव हि वातेन शक्यो धर्षयितुं यतः ॥५१॥
अथ ये संहता वृक्षाः सर्वतः सुप्रतिष्ठिताः ।
न ते शीघ्रेण वातेन हन्यन्ते ह्येकसंश्रयात् ॥५२॥
एवं मनुष्यमेकं च शौर्येणापि समन्वितं ।
शक्यं द्विषन्तो मन्यन्ते हिंसन्ति च ततः परं ॥५३॥

एवं प्रजीविमन्त्र इदमासनसञ्ज्ञकं। एतत् समाकर्ण्य चिरञ्जीविनं प्राह। भद्र त्वमपि स्वाभिप्रायं वद। सो ऽब्रवीत्। देव षाड्गुण्यमध्ये मम संश्रयः प्रतिभाति। तत् तस्यानुष्ठानं कार्यं। उक्तं च यतः।

असहायः समर्थो ऽपि तेजस्वी किं करिष्यति ।
निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति ॥५४॥
सङ्गतिः श्रेयसी पुंसां स्वपक्षे च विशेषतः ।
तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः ॥५५॥

तदत्रैव स्थितेन त्वया कश्चित् समर्थः समाश्रयणीयः। यो विपत्प्रतीकारं करोति। यदि पुनस्त्वं स्वस्थानं त्यक्त्वान्यत्र यास्यसि। तत् को ऽपि ते वाङ्मात्रेणापि सहायत्वं न करिष्यति। उक्तं च यतः।

वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदं ॥५६॥

अथवा नैतदकालं यद्बलिनमेकं समाश्रयेत्। लघूनामपि संश्रयो रक्षायैव भवति। उक्तं च यतः।

सङ्घातवान् यथा वेणुर्निबिडो वेणुभिर्वृतः ।
न शक्यः स समुच्छेत्तुं दुर्बलो ऽपि तथा नृपः ॥५७॥

यदि पुनरुत्तमसंश्रयो भवति। तत् किमुच्यते। उक्तं च।

महाजनस्य सम्पर्कः कस्य नोन्नतिकारकः ।

पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियं ॥५८॥

तदेवं संश्रयं विना न कश्चित् प्रतीकारो भवति। तस्मात् संश्रयः कार्यः। इत्येवं मे ऽभिप्रायः। एवं चिरञ्जीविमन्त्रः। अथैवमभिहिते स मेघवर्णश्चिरन्तनं पितृसचिवं दीर्घायुषं सकलनीतिशास्त्रपारगं स्थिरजीव्यभिधानं प्रणम्य प्रोवाच। तात यदेते मया पृष्टास्तावदत्र स्थितस्यापि तव तत् परीक्षार्थं। येन त्वं सकलं श्रुत्वा यदुचितं तद्वदसि। तद्युक्तं भवति तन्ममादेश्यमिति। सो ऽब्रवीत्। वत्स सर्वैरप्येतैर्नीतिशास्त्राश्रयमभिहितं सचिवैः। तदुपयुज्यते स्वकालोचितं सर्वमेव। परमेष द्वैधीभावस्य कालः। उक्तं च यतः।

अविश्वासं सदा तिष्ठेत् सन्धिना विग्रहेण च।
द्वैधीभावं समाश्रित्य पापे शत्रौ बलीयसि ॥५९॥

तच्छत्रुर्विश्वास्याविश्वस्तैर्लोभं दर्शयद्भिः सुखेनोच्छिद्यते। उक्तं च।

उच्छेद्यमपि विद्वांसो वर्धयन्त्यरिमेकदा।
गुडेन वर्धितः श्लेष्मा सुखवृद्ध्या निपात्यते ॥६०॥

तथा च। स्त्रीणां शत्रोः कुमित्रस्य पण्यस्त्रीणां विशेषतः।
यो भवेदेकभावेन न स जीवति मानवः ॥६१॥
कृत्यं देवद्विजातीनामात्मनश्च गुरोस्तथा।
एकभावेन कर्तव्यं शेषं द्वैधं समाश्रितं ॥६२॥
एको भावः सदा शस्तो यतीनां भावितात्मनां।
श्रीलुब्धानां न लोकानां विशेषेण महीभृतां ॥६३॥

तद्द्वैधीभावं संश्रितस्य तव स्थाने शोभनं भविष्यति। लोभाश्रयस्त्वां न शत्रुरुच्चाटयिष्यति। अपरं यदि किञ्चिच्छिद्रं तस्य पश्यसि। तद्गत्वा व्यापादयिष्यसीति। मेघवर्ण आह। तात मया सो ऽविदितसंश्रयः। तत् कथं तस्य छिद्रं ज्ञास्यामि। स्थिरजीवी प्राह। वत्स न केवलं स्थानं छिद्रमपि तस्य प्रकटीकरिष्यामि प्रणिधिभिः। उक्तं च।

गावो गन्धेन पश्यन्ति वेदैः पश्यन्ति वै द्विजाः ।
चरैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥६४॥

तथोक्तं चात्रविषये ।

यस्तीर्थानि निजे पक्षे परपक्षे विशेषतः ।
गुप्तैश्चरैर्नृपो वेत्ति न स दुर्गतिमाप्नुयात् ॥६५॥

मेघवर्ण आह । तात कानि तीर्थान्युच्यन्ते कतिसङ्ख्यायुतानि च । कीदृशाश्च गुप्तचराः । तत् सर्वं त्वन्निवेद्यतामिति । सो ऽब्रवीत् । अत्रविषये भगवता नारदेन युधिष्ठिरो राजा प्रोक्तः । शत्रुपक्षे ऽष्टादश तीर्थानि स्वपक्षे पञ्चदश । त्रिभिस्त्रिभिर्गुप्तचरैस्तानि ज्ञेयानि । तैर्ज्ञातैः स्वपक्षः परपक्षश्च वश्यो भवति । उक्तं चात्रविषये मुनिना नारदेन युधिष्ठिरं प्रति ।

कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥६६॥

तीर्थशब्देनात्र युक्तकर्माभिधीयते । तद्यदि तेषां कुत्सितं भवति । तत् स्वामिनोपघाताय भवति । तच्च प्रधानं चेद्भवति । तन्नृपस्याभ्युदयाय स्यात् । तद्यथा मन्त्री । पुरोहितः । सेनापतिः । युवराजः । दौवारिकः । अन्तर्वंशिकः । प्रशास्ता । समाहर्ता । सन्निधाता । उपदेष्टा । नायकः । पारिषदः । अश्वाध्यक्षः । गजाध्यक्षः । कोशाध्यक्षः । दुर्गपालः । प्रोत्कटभृत्यः । अटविकश्च परपक्षे । एतेषां भेदेन द्राग्रिपुः साध्यते । स्वपक्षे च यथा जननी । देवी । कञ्चुकी । मालिकः । शय्यापालकः । स्पशाध्यक्षः । सांवत्सरिकः । भिषक् । जलवाहकः । ताम्बूलवाहकः । आचार्यः । अङ्गरक्षकः । स्थानचिन्तकः । छत्रधारः । विलासिनी च । एतेषां वैरद्वारेण स्वपक्षे विघातं । ततश्च ।

वैद्यसांवत्सराचार्याः स्वपक्षे ऽधिकृताश्चराः ।
यथा हि तुण्डिकोन्मत्ताः सर्वं जानन्ति शत्रुषु ॥६७॥

मेघवर्ण आह। तात किं निमित्तमेवम्विधं प्राणान्तिककरणं वैरं सर्ववायसोलूकानां। स आह। वत्स कदाचित् पूर्वं हंससारसशुककोकिलमयूरचातकोलूककपोतपारावततित्तिरिचाषभासभारद्वाजकारायिकाश्यामाकाष्ठकुट्टपुष्करप्रभृतयः सर्वे पक्षिणः समभ्येत्य सोद्वेगं मन्त्रयितुमारब्धाः।. अहो ऽस्माकं तावद्वैनतेयो राजा। स च वासुदेवभक्तो न कामपि चिन्तामस्माकं करोति। तत् किं तेन वृथास्वामिना यो ऽस्माकं लुब्धकपाशबन्धनादिव्यसनव्याकुलितानां रक्षां न विधत्ते। उक्तं च यतः।

एको ऽपि को ऽपि सेव्यो यः क्षीणं क्षीणं पुनर्नवं।
अनुद्विग्नः करोत्येव सूर्यश्चन्द्रमसं यथा ॥ ६८ ॥

अन्यस्तु स्वामी नाममात्रेणैव। उक्तं च।

शशलैरपि चाक्षुद्रैः सुरतुल्यनिभेक्षणैः।
मत्स्यैरिव लघुहेय्यः क्रियते पार्थिवो जडः ॥ ६९ ॥
यो न रक्षति वित्रस्तान् पीड्यमानान् परैः सदा।
जन्तून् पार्थिवरूपेण स कृतान्तो न संशयः ॥ ७० ॥
बुद्धिमान् पुरुषो जह्याद्भिन्नां नावमिवाम्भसि।
अप्रवक्तारमाचार्यमनधीयानमृत्विजं ॥ ७१ ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीं।
ग्रामकामं च गोपालं वनकामं च नापितं ॥ ७२ ॥

तत् सञ्चिन्त्यान्यः कश्चिद्राजा विहङ्गानां क्रियतामिति। अथ तैर्भद्राकारमुलूकमवलोक्य सर्वैरभिहितं। एष कौशिको ऽस्माकं राजा भवत्विति। तदानीयतां नृपाभिषेकोचितः समस्तवस्तुसम्भारसार इति। अथानीतेषु विविधतीर्थोदकेषु। प्रगुणीकृते च चक्राङ्कितासहदेवीप्रभृत्यष्टोत्तरशतमूलिकासङ्घाते। स्थिरीकृते च सिंहासने। वर्तिते च सप्तद्वीपसमुद्रभूधरविचित्रे धरणीमण्डले। प्रसारिते च व्याघ्रचर्मणि।

पञ्चपल्लवकुसुमाक्षतपूरितेषु कनककलशेषु । सज्जीकृतेषु दर्पणादिषु मङ्गल्यवस्तुषु । धृतं पठत्सु वेदोपचारपरेषु वन्दिमुख्येषु विप्रेषु । गीयमानमङ्गलगीतप्रधाने युवतीजने । सितसिद्धार्थलाजागोरोचनाग्रथितकुसुमशङ्खादिविचित्रे पुरःसज्जीकृते ऽक्षतपात्रे । उपढौकिते नीराजनादिविधौ । निनदत्सु मङ्गलतूर्येषु । उलूको ऽभिषेकार्थं यावत् पवाद्यालङ्कृतदेविकामध्याधिष्ठितसिंहासनमुपविशति । तावत् कुतो ऽपि क्रूरकोङ्कारसंसूचितनिजप्रवेशो वायसस्तं समाजं समायातः । सो ऽचिन्तयत् । अहो किमेष सकलपक्षिसमागमो महोत्सवः । अथ ते पक्षिणस्तं दृष्ट्वा मिथः प्रोचुः । अहो पक्षिणां मध्ये चतुरो ऽयं वायसः श्रूयते । उक्तं च ।

नराणां नापितो धूर्तः पक्षिणां चैव वायसः ।
दंष्ट्रिणां च शृगालस्तु श्वेतभिक्षुस्तपस्विनां ॥७३॥

तदस्यापि वचनं सङ्ग्राह्यं । उक्तं च ।

बहुधा बहुभिः सार्धं चिन्तिताः सुनिरूपिताः ।
न कथञ्चिद्विलीयन्ते विद्वद्भिश्चिन्तितानयाः ॥७४॥

अथ वायसः समभ्येत्य तानाह । भो किं महाजनसमागमो ऽयं परममहोत्सवश्च । पक्षिण ऊचुः । भो नास्ति कश्चिद्विहङ्गानां राजा । तदस्यैवोलूकस्य सकलविहङ्गराज्याभिषेकः समस्तपक्षिभिर्निरूपित आस्ते । तत् त्वमपि स्वमतं देहि । प्रस्तावे समागतो ऽसि । अथासौ काको विहस्य प्रोवाच । अहो न युक्तमेतत् । यन्मयूरहंसकोकिलचक्रवाकशुककारण्डवहारीतकसारसादिषु पक्षिप्रधानेषु विद्यमानेषु तस्य दिवान्धस्य करालवक्त्रस्याभिषेकः क्रियते । तन्नैतन्मम मतं । यतः ।

वक्रनासं सुजिह्माक्षं क्रूरमप्रियदर्शनं ।
अक्रुद्धस्येदृशं वक्त्रं भवेत् क्रुद्धस्य कीदृशं ॥७५॥
स्वभावरौद्रमत्युग्रं क्रूरमप्रियवादिनं ।

उलूकं नृपतिं कृत्वा का नः सिद्धिर्भविष्यति ॥७६॥

अपरं वैनतेये स्वामिनि सति किमेष दिवान्धः क्रियते राजा। तद्यद्यपि गुणवान् भवति। तथाप्येकस्मिन् स्वामिनि स्थिते। नान्यो भूयः प्रशस्यते। उक्तं च यतः।

एक एव हितार्थाय तेजस्वी पार्थिवो भुवः।
युगान्त इव भास्वन्तो बहवो ऽत्र विपत्तये ॥७७॥

ततस्तस्य नाम्नापि यूयं परेषामगम्या भविष्यथ। उक्तं च।

गुरूणां नाममात्रे ऽपि गृहीते स्वामिसम्भवे।
दुष्टानां पुरतः क्षेमं तत्क्षणादेव जायते ॥७८॥

तथा च। व्यपदेशेन महतां सिद्धिः सञ्जायते परा।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखं ॥७९॥

पक्षिणः पृच्छन्ति। कथमेतत्। वायसः कथयति। कस्मिंश्चिद्वनोद्देशे चतुर्दन्तो नाम महागजो यूथाधिपः प्रतिवसति स्म। तत्र कदाचिन्महत्यनावृष्टिः सञ्जाता प्रभूतवर्षाणि। यया तडागह्रदपल्वलसरांसि सर्वाण्यपि शोषमुपागतानि। अथ तैः समस्तगजैः स गजराजः प्रोक्तः। देव पिपासाकुलाः। कलभाः केचिन्मृताश्चापरे। तदन्विष्यतां कश्चिज्जलाशयः। यत्र जलपानेन स्वस्थतां व्रजन्ति। ततस्तेनाष्टास्वपि दिक्षूदकान्वेषणाय वेगचण्डा अनुचराः प्रेषिताः। अथ ये पूर्वदिग्भागे गतास्तैः हंसकारण्डवादिजलपक्षिभिरुपालङ्कृतो ऽनेककुसुमफलावनतपादपैरुपशोभितश्चन्द्रसरो नामको ह्रदो दृष्टः। दृष्ट्वा मुदान्वितैस्तैः परिवृत्य स्वामिने प्रणम्योक्तं। अस्ति महान् ह्रदो विविक्ते प्रदेशे स्थलमध्यगतः पातालगङ्गाजलेन सदैव परिपूर्णः। तत् तत्र गम्यतामिति। तथानुष्ठिते पञ्चरात्रमुपसर्पद्भिः समासादितस्तैः स ह्रदः। तत्र स्वेच्छया तज्जलमवगाह्यास्तमनवेलायां निष्क्रान्ताः। तस्य ह्रदस्य समन्ताच्छशकविलान्यसङ्ख्यानि सुकुमलभूम्यां तिष्ठन्ति। तानि च

सर्वाणि तैर्गजैरितश्चेतश्च भ्राम्यद्भिर्भग्नानि। तत्र च बहवः शशका भग्नपादशिरोग्रीवा विहिताः। केचिन्मृताः केचिच्च जीवशेषा जाताः। अथ गते तस्मिन् गजयूथे सर्वे ते शशकाः सोद्वेगं गजपादक्षुण्णसमावासाः केचिद्भग्नपादा अन्ये जर्जितकलेवरा रुधिराप्लुता अन्ये हतशिशवो बाष्पपिहितलोचनाः समेत्य मिथो मन्त्रं चक्रुः। अहो विनष्टा वयं। नित्यमेवैतद्गजयूथमागमिष्यति। यतो नान्यत्र जलमस्ति। तत् सर्वेषां नाशो भविष्यति। उक्तं च यतः।

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः।
हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥८०॥

तच्चिन्त्यतां कश्चिन्निवारणोपायः। तत्रैके प्रोचुः। गम्यतां देशत्यागेन। उक्तं च यतः।

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥८१॥
क्षेम्यां सस्यप्रदां नित्यं पशुवृद्धिकरीमपि।
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन् ॥८२॥

ततश्चान्यैरुक्तं। भो पितृपैतामहं स्थानमेतन्न शक्यते सहसा त्यक्तुं। तत् क्रियतां तेषां काचिद्विभीषिका। यत् कथमपि दैववशान्न समागच्छन्ति। उक्तं च यतः।

निर्विषेणापि सर्पेण कर्तव्या महती फटा।
विषं भवतु मा वास्तु फटाटोपो भयङ्करः ॥८३॥

अथान्ये प्रोचुः। यद्येवं तदस्ति तेषां महद्विभीषिकास्थानं येन नागमिष्यन्ति चतुरदूतो यत्नः। सा च बिभीषिका यतो ऽस्मत्स्वामी विजयदत्तो नाम शशकश्चन्द्रमण्डले निवसति। तत् प्रेष्यतां कश्चिन्मिथ्यादूतो यूथाधिपसकाशं। वक्तव्यं च यच्चन्द्रस्त्वामत्र ह्रद आगच्छन्तं निषेधयति। यतो ऽस्मत्परिग्रहो ऽस्य ह्रदस्य समन्तात् प्रतिवसति।

एवमभिहिते ऽहेयवचनात् कदाचिद्विरमति। अथान्ये प्रोचुः। यद्येवं तदस्त्यत्र लम्बकर्णो नाम शशकः। स च वचनरचनाचतुरो दूतकर्मज्ञः। स तत्र ह्रदे प्रेष्यतामिति। उक्तं च यतः।

साकारो निस्पृहो वाग्मी नानाशास्त्रविचक्षणः।
परचित्तावगन्ता च राज्ञःपुरुष इष्यते ॥८४॥

अन्यच्च। यो मूर्खं लौल्यसम्पन्नं राजद्वारिकमाचरेत्।
मिथ्यावादं विशेषेण तस्य कार्यं न सिध्यति ॥८५॥

तदन्विष्यतां यद्यस्मद्वचनात् स यास्यति। अथान्ये प्रोचुः। अहो युक्तमुक्तं। नान्यो ऽस्ति कश्चिदुपायो ऽस्माकं जीवितस्य। तत् क्रियतां। लम्बकर्णो ऽन्विष्यन् निरूप्यतामिति। तथानुष्ठिते लम्बकर्णो ऽपि गजमार्गमासाद्य यूथपतिसहस्रैः परिवृतं गजेन्द्रं तस्यैव सरसो ऽभिमुखमायान्तं दृष्ट्वा चिन्तयामास। अशक्यो ऽनेनास्मद्विधानां समागमः। यत्कारणं स्पृशन्नपि गजो हन्तीत्युक्तमेवास्ति। तत् सर्वथाप्रधृष्यायां भूमौ सन्दर्शनमस्य प्रयच्छामि। इति विचिन्त्योच्चैस्तरमगम्यं स्थलमारुह्य तं यूथाधिपमुवाच। भो भो दुष्टगज किमेवं लीलया निःशङ्कितया परह्रदे ऽत्रागच्छसि। तन्निवर्त्यतामिति। तदाकर्ण्य विस्मितमना गज आह। भो कस्त्वं। स आह। अहं विजयदत्तो नाम शशकश्चन्द्रमण्डले निवासी। साम्प्रतं भगवता चन्द्रमसा तव पार्श्वे प्रहितो दूतः। जानात्येवं भवान् यथार्थवादिनो दूतस्य न दोषः करणीयः। दूतमुखा हि राजानः सर्व एव। उक्तं च।

उद्धतेष्वपि शस्त्रेषु बन्धुवर्गबधेष्वपि।
परुषाण्यपि जल्पन्तो बध्या दूता न भूभुजा ॥८६॥

सो ऽहं भवन्तं चन्द्राज्ञया ब्रवीमि। कथं नाम प्राणिन आत्मानं परं चापरिच्छिद्य शक्तितः परापकारैर्वर्तन्त इति। उक्तं च यतः।

परेषामात्मनश्चैव यो विचार्य बलाबलं।

कार्यार्थोत्तिष्ठते मोहादापदः स समीहते ॥ ८७॥

तच्छ्रुत्वा श्रद्धेयत्वात् तस्य वचनस्य गज आह। भो शशक तत् कथय भगवतश्चन्द्रस्य सन्देशं येन सत्वरं क्रियत इति। सो ऽब्रवीत्। भवतातीतदिवसे यूथेन सहागच्छता प्रभूताः शशका निपातिताः। तत् किं न वेत्ति भवान् यन्मम परिग्रहो ऽयं भयाल्लोके प्रख्यातनामास्मि शशाङ्क इति। तद्यदि जीवितेन प्रयोजनं तदा प्रयोजनेनापि त्वयात्र ह्रदे भूयो नागन्तव्यं। इति सन्देशः। तत् किं बहुना प्रलपितेन। यदि त्वमस्माद्व्यापारान्न निवर्तसे। ततो ऽस्मत्सकाशान्महान्तमनर्थं प्राप्स्यसीति। यदि त्वमद्यदिवसादारभ्य निवर्तसे तत् ते महान् विशेषो भविष्यति। यत्कारणमस्मदीयज्योत्स्नयाप्यायितशरीरः सपरिवारः सुखेनास्मिन् वने यथेष्टचेष्टं विहरिष्यसि। अन्यथास्मत्कृतरश्मिसंरोधाद्घर्मेण परितापितशरीरः सपरिवारो विनाशमेष्यसीति। तच्छ्रुत्वा हस्तिराजो ऽतीवक्षुभितहृदयश्चिरं विचिन्त्याब्रवीत्। भद्र सत्यं मयापकृतं भगवतश्चन्द्रमसः। सो ऽहमधुना तेन सह विरोधं न करिष्यामि। तदाशु दर्शय पन्थानं येनाहं गत्वा भगवन्तं क्षमयामि। शशको ऽब्रवीत्। आगच्छतु भवानेकाकी येनाहं तं दर्शयामि। गजः प्राह। अथ क्व वर्तते भगवान् स्वामी चन्द्रः साम्प्रतं। स त्वाह। नन्वत्र ह्रदे साम्प्रतं शशकानां युष्मद्यूथमथितानां हतशेषाणां समाश्वासनाय समायातस्तिष्ठति। अहं तवान्तिके पुनः प्रेषितः। गज आह। भो यद्येवं तद्दर्शय मे स्वामिनं येन प्रणम्यान्यत्र गच्छामि। शशक आह। भो समागच्छ मया सह त्वमेकाकी येन तेन सह दर्शनं करोषि। तथानुष्ठिते शशको निशागमे तं नीत्वा ह्रदतटे निधाय जलमध्ये चन्द्रबिम्बमदर्शयत्। आह च। एष नः स्वामी जलमध्ये समाधिस्थस्तिष्ठति। तं निभृतं प्रणम्य सत्वरं व्रज। नो चेत् समाधिभङ्गाद्भूयो ऽपि प्रभूतं तवोपरि कोपं करिष्यति। ततो गजो ऽपि हुङ्कारपूर्वं

जले गुण्डादण्डं प्रसारितवान् । अथ सङ्क्षुभितोदकवशादितश्चेतश्च चक्रारूढ इव भ्रमति चन्द्रमण्डले चन्द्रसहस्रमपश्यत् । अथ विजयदत्तः सुतरामुद्विग्नहृदयः प्रतिनिवृत्य हस्तिराजमब्रवीत् । देव कष्टं कष्टं भवता यद्द्विगुणं रोषितश्चन्द्रः । स आह । केन हेतुना भगवांश्चन्द्रो मयि प्रकुपितः । विजयदत्तो ऽब्रवीत् । स्पर्शनादस्य पानीयस्य । अथ तच्छ्रुत्वा संलीनकर्णो गजपतिरवनितलनतशिरसा प्रणम्य भगवन्तं चन्द्रमसं क्षमयामास । भूयश्च विजयदत्तं प्रत्याह । भद्र अशेषकार्येष्वपि मद्वचनाद्भगवांश्चन्द्रो ममोपरि प्रसादयितव्यः । न चाहं पुनरिहागमिष्यामि । अथ गजो ऽपि भयत्रस्तमनास्तं प्रणम्य पुनर्गमनाय प्रस्थितः । शशकाश्च तद्दिनादारभ्य सपरिवाराः सुखेन स्वेषु स्थानेषु तिष्ठन्ति । अतो ऽहं ब्रवीमि ।

व्यपदेशेन महतां सिद्धिः सञ्जायते परा ।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखं ॥ ८८ ॥

अपि च क्षुद्रमलशङ्कापुरुषं व्यसनिनमकृतज्ञं पृष्ठप्रलपनशीलं स्वामित्वेन नाभियोजयेज्जीवितकामः । उक्तं च ।

क्षुद्रमर्थपतिं प्राप्य न्यायान्वेषणतत्परौ ।
उभावपि क्षयं प्राप्तौ पुरा शशकपिञ्जलौ ॥ ८९ ॥

ते पक्षिण ऊचुः । कथमेतत् । वायस आह । अस्ति कस्मिंश्चि कथ ॥२॥ द्वनोद्देशे महान्यग्रोधवृक्षे पुरा स्वयमहमवसं । तत्राधस्तात् कोटरे कपिञ्जलो नाम चटकः प्रतिवसति स्म । अथ सदैवास्तमनवेलायामागतयोरनेकसुभाषितगोष्ठ्या देवर्षिराजर्षिब्रह्मर्षिपुराणचरितकीर्तनेन च पर्यटनदृष्टानेककुतूहलकथनेन च परमसुखमनुभवतोः कालो व्रजति । अथ कदाचित् कपिञ्जलः प्राणयात्रार्थमन्यैश्चटकैः सह पक्वशालिप्रायं देशं गतः । ततो यावन्निशासमये ऽपि नायातः । तावदहं सोद्वेगमनास्तद्वियोगदुःखितश्चिन्तितवान् । अहो किमद्य स कपिञ्जलो नायातः ।

किं पाशेन केनापि बद्धः। उताहोस्वित् केनापि च व्यापादितः। सर्वथैव यदि कुशली भवति। तन्मां विना नो तिष्ठति। एवं मे चिन्तयतो बहूनि दिनान्यतिक्रान्तानि। ततश्च कदाचिच्छीघ्रगो नाम शशको ऽस्तमनवेलायामागत्य तस्मिन् कोटरे प्रविष्टः। मयापि कपिञ्जलनिराशेन न निवारितः। अथान्यस्मिन्नहनि कपिञ्जलः शालिभक्षणादतीवपीवरतनुः स्वमाश्रयं स्मृत्वा भूयो ऽपि तत्रैव समायातः। अथवा साध्विदमुच्यते।

न तादृग्जायते सौख्यमपि स्वर्गे शरीरिणां।
दारिद्र्ये ऽपि हि यादृक् स्यात् स्वदेशे स्वपुरे गृहे॥ १०॥

अथासौ वटकोटरान्तर्गतं शशकं दृष्ट्वा साक्षेपमिदमाह। भो शशक न त्वया सुन्दरं कृतं यन्ममावसथे प्रविष्टो ऽसि। तच्छीघ्रमपगम्यतां। शशक आह। मूर्ख न तवेदं गृहं किंतु ममैवं। तत् किं मिथ्या परुषाणि वचनानि प्रजल्पसि। तच्छीघ्रं व्रज। नो चेत् त्वं न भविष्यसि। चटको ऽब्रवीत्। यद्येवं तर्हि प्रातिवेश्यकाः पृच्छ्यन्तां। उक्तं च यतः।

वापीकूपतडागानां गृहस्योपवनस्य च।
सामन्तप्रत्ययात् सिद्धिरित्येवं मनुरब्रवीत्॥ ११॥

तथा च। गृहक्षेत्रविवादेषु कूपोपवनभूमिषु।
समुत्पन्ने विवादे तु सामन्तात् प्रत्ययो भवेत्॥ १२॥

अथ शशक आह। मूर्ख किं न श्रुतं त्वया स्मृतिवचनं यदाह।

प्रत्यक्षं यस्य यद्भुक्तं क्षेत्राद्यं दश वत्सरान्।
तत्र भुक्तिः प्रमाणं स्यान्न साक्षी नाक्षराणि वा॥ १३॥

तथा मूर्ख त्वया न श्रुतं नारदस्य मतं।

मानुषाणां प्रमाणं स्याद्भुक्तिर्वै दशवार्षिकी।
विहङ्गानां तिरश्चां च यावदेव समाश्रयः॥ १४॥

तन्ममैतद्गृहं धर्मतो न तवेति। अथ। अथ कपिञ्जल आह। भो यदि स्मृतिं प्रमाणं करोषि। तदागच्छ मया सह येन स्मृतिपाठकं पृच्छावः। धर्मतो यस्य दास्यति गृहं स गृह्णातु। तथानुष्ठिते व्यवहारप्रत्ययार्थमभिप्रस्थितौ। मया च चिन्तितं। किमत्र भविष्यति। मयापि द्रष्टव्यो ऽयं न्यायः। ततः कौतुकादहमपि तावनु प्रस्थितः। अथ नातिदूरं गत्वा शशकः कपिञ्जलमपृच्छत्। भद्र को नामावयोर्व्यवहारं द्रक्ष्यति। सो ऽब्रवीत्। नन्वयं प्रबलमारुतोद्धूतसलिलचलतरङ्गसङ्घजनितकलकलारवाया भगवत्या गङ्गायाः पुलिनगतस्तपोनियमव्रतयोगसंस्थितः सर्वसत्त्वजातानुकम्पी दधिकर्णो नाम मार्जार इति। अथ दृष्ट्वा तं भयप्रणोदितान्तरात्मा शशकः पुनरब्रवीत्। अलमनेन क्षुद्रेण। उक्तं च।

न हि विश्वसनीयं स्यात् तपश्छद्मस्थिते ऽधमे।
दृश्यन्ते चैव तीर्थेषु गलवार्तास्तपस्विनः॥१५॥

एतस्मिन्नन्तरे दधिकर्णो नामारण्यमार्जारः स ताभ्यां कृतं विवादं श्रुत्वा तयोर्विश्वासनार्थं मार्गासन्ननदीतटमासाद्य कृतकुशपरिग्रहो द्वादशतिलकयुक्तो निमीलितैकनयन ऊर्ध्वबाहुरधःपादस्पृष्टभूमिः सूर्याभिमुख इमां धर्मोपदेशनामकरोत्। अहो असारो ऽयं संसारः। क्षणभङ्गुराः प्राणाः। स्वप्नसदृशाः। प्रियसमागमाः। इन्द्रजालवत् कुटुम्बपरिग्रहः। तद्धर्मं मुक्त्वा नान्या गतिरस्ति। उक्तं च यतः।

अनित्यानि शरीराणि विभवो नैव च स्वतः।
नित्य सन्निहितो मृत्युः कर्तव्यो धर्मसङ्ग्रहः॥१६॥
यस्य धर्मविहीनानि दिनान्यायान्ति यान्ति च।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति॥१७॥

तथा च। नाच्छादयति कौपीनं न दंशमशकापहं।
शुनः पुच्छमिव व्यर्थं पाण्डित्यं धर्मवर्जितं॥१८॥

पुलाका इव धान्येषु पूतिका इव पक्षिषु ।
मशका इव मर्त्येषु येषां धर्मो न कारणं ॥ ९९ ॥
श्रेयः पुष्पफलं वृक्षाद्दध्नः श्रेयो घृतं स्मृतं ।
श्रेयस्तैलं च पिण्याकाच्छ्रेयो धर्मश्च मानुषात् ॥ १०० ॥
सृष्टा मूत्रपुरीषार्थमाहाराय च केवलं ।
धर्महीनाः परार्थाय पुरुषाः पशवो यथा ॥ १०१ ॥
स्थैर्यं कृत्येषु सर्वेषु शंसन्ति नयपण्डिताः ।
बह्वन्तराययुक्तस्य धर्मस्य त्वरिता गतिः ॥ १०२ ॥
संक्षेपात् कथ्यते धर्मो जनाः किं विस्तरेण तु ।
परोपकारः पुण्याय पापाय परपीडनं ॥ १०३ ॥
श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यतां ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ १०४ ॥

अथ तस्य तां धर्मोपदेशनां श्रुत्वा शशक आह। भो भो कपिञ्जल एष नदीतीरे तपस्वी धर्मवादी तिष्ठति। तदेनं पृच्छावः। कपिञ्जल आह। ननु स्वभावतो ऽस्माकं शत्रुभूतो ऽस्ति। तद्दूरे स्थितौ पृच्छावः। कदाचिदस्य व्रतवैकल्यं सम्पद्यते। ततो दूरस्थितावूचतुः। भो भो तपस्विन् धर्मदेशक आवयोर्विवादो वर्तते। तद्धर्मशास्त्रद्वारेणास्माकं निर्णयं देहि। यो हीनवादी स ते भक्ष्य इति। सो ऽब्रवीत्। भद्रौ मा मैवं वदतं। निवृत्तो ऽहं नरकपातमार्गात्। अहिंसैव धर्ममार्गः। उक्तं च यतः।

अहिंसा पूर्वको धर्मो यस्मात् सद्भिरुदाहृतः ।
यूकमत्कुणदंशादींस्तस्मात् तानपि रक्षयेत् ॥ १०५ ॥
हिंसकान्यपि भूतानि यो हिंसति स निर्घृणः ।
स याति नरकं घोरं किं पुनर्यः शुभानि च ॥ १०६ ॥

एते ऽपि ये यज्ञकर्मणि पशून् व्यापादयन्ति। ते ऽपि मुग्धाः। परमार्थं

च श्रुतेर्न जानन्ति। तत्र किलैतदुक्तं। अजैर्यष्टव्यमिति। तत्राजा व्रीहयस्त्रिवार्षिकाः सप्तवार्षिका वा कथ्यन्ते। ये तु पुनर्न जायन्त इति। उक्तं च। वृक्षांश्छित्वा पशून् हत्वा कृत्वा रुधिरकर्दमं।

यद्येवं गम्यते स्वर्गे नरके केन गम्यते ॥१०७॥

तन्नाहं भक्षयिष्यामि। परं जयपराजयनिर्णयं करिष्यामि। किन्त्वहं वृद्धो दूराद्युवयोर्भाषान्तरं सम्यग्न शृणोमि। एवं ज्ञात्वा मम समीपवर्तिनौ भूत्वा ममाग्रे न्यायं वदतं। येन विज्ञाय विवादपरमार्थं वचो वदतो मे परलोकबाधो न भवति। उक्तं च यतः।

मानाद्वा यदि वा लोभात् क्रोधाद्वा यदि वा भयात्।
यो न्यायमन्यथा ब्रूते स याति नरकं नरः ॥१०८॥

पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।
शतं कन्यानृते हन्ति सहस्रं पुरुषानृते ॥१०९॥

उपविष्टः सभामध्ये यो न वक्ति स्फुटं वचः।
तस्माद्दूरेण स त्याज्यो न्यायो वा कीर्तयेदृतं ॥११०॥

तस्माद्विश्रब्धौ मम कर्णोपान्तिके स्फुटं निवेदयतं। किं बहुना। तेन क्षुद्रेण तथा तौ तूर्णं विश्वासितौ। यथा तस्योत्सङ्गवर्तिनौ सञ्जातौ। ततश्च तेनापि समकालमेवैकः पादान्तेनाक्रान्तः। अन्यो दंष्ट्राक्रकचेन च। ततो गतप्राणौ भक्षिताविति। अतो ऽहं ब्रवीमि।

क्षुद्रमर्थपतिं प्राप्य न्यायान्वेषणतत्परौ।
उभावपि क्षयं प्राप्तौ पुरा शशकपिञ्जलौ ॥१११॥

भवन्तो ऽप्येनं दिवान्धं क्षुद्रमर्थपतिमासाद्य रात्र्यन्धाः सन्तः शशकपिञ्जलमार्गेण यास्यन्ति। एवं ज्ञात्वा यदुचितं तद्विधेयमतः परं। अथ तस्य तद्वचनमाकर्ण्य साधनेनाभिहितमित्युक्त्वा। भूयो ऽपि पार्थिवार्थं समेत्य मन्त्रयिष्यामह इति ब्रुवाणाः सर्वे पक्षिणो यथाभिमतं जग्मुः। केवलमवशिष्टो भद्रासनोपविष्टो ऽभिषेकाभिमुखो दिवान्धः कृकालि

कया सहास्ते। आह च। कः को ऽत्र। भो भो किमद्यापि न क्रियते ममाभिषेकः। इति श्रुत्वा कृकालिकयाभिहितं। भद्र तवाभिषेके कृतो ऽयं विघ्नो वायसेन। गताश्च सर्वे ऽपि विहगा यथेप्सितासु दिक्षु। केवलमेको ऽयं वायसो ऽवशिष्टः केनापि हेतुना तिष्ठति। तत् त्वरितमुत्तिष्ठ येन त्वां स्वाश्रयं प्रापयामि। तच्छ्रुत्वा सविषादमुलूको वायसं प्राह। भो भो दुष्टात्मन् किं मया ते ऽपकृतं। यद्राज्याभिषेको मे विघ्नितः। तदद्य प्रभृति सान्वयमावयोर्वैरं सञ्जातं। उक्तं च।

रोहति सायकैर्विद्धं छिन्नं रोहति चासिना।
वचो दुरुक्तं बीभत्सं न प्ररोहति वाक्क्षतं ॥११२॥

इत्येवमभिधाय कृकालिकया सह स्वाश्रयं गतः। अथ भयव्याकुलो वायसो व्यचिन्तयत्। अहो अकारणं वैरमासादितं मया। किमिदं व्याहृतं। उक्तं च यतः।

अदेशकालज्ञमनायतिक्षमं यदप्रियं लाघवकारि चात्मनः।
यो ऽत्राब्रवीत् कारणवर्जितं वचो न तद्वचः स्याद्विषमेव तद्वचः ॥

तथा च।

बलोपपन्नो ऽपि हि बुद्धिमान् नरः परं नयेन्न स्वयमेव वैरितां।
भिषग्ममास्तीति विचिन्त्य भक्षयेदकारणात् को हि विचक्षणो विषं ॥
परपरिवादः परिषदि न कथञ्चित् पण्डितेन वक्तव्यः।
सत्यमपि तन्न वाच्यं यदुक्तमसुखावहं भवति ॥११५॥
सुहृद्भिराप्तैरसकृद्विचारितं स्वयं च बुद्ध्या प्रविचारिताश्रयं।
करोति कार्यं खलु यः स बुद्धिमान् स एव लक्ष्म्या यशसां च भाजनं ॥

एवं विचिन्त्य काको ऽपि प्रयातः। तदा प्रभृत्यस्माभिः सह कौशिकानामन्वयगतं वैरमस्ति। मेघवर्ण आह। तात एवं गते ऽस्माभिः किं कृत्यमस्ति। स आह। वत्स एवं गते ऽपि षाड्गुण्यादपरः स्थूलो ऽभिप्रायो ऽस्ति। तमङ्गीकृत्य स्वयमेवाहं तद्विजयाय यास्यामि।

रिपून् वञ्चयित्वा वधिष्यामि। उक्तं च यतः।

बहुबुद्धिसमायुक्ताः सुविज्ञाना बलोत्कटान्।
शक्ता वञ्चयितुं धूर्ता ब्राह्मणं छागलादिव ॥११७॥

कथा ॥३

मेघवर्ण आह। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्मिंश्चिदधिष्ठाने मित्रशर्मा नाम ब्राह्मणः कृताग्निहोत्रपरिग्रहः प्रतिवसति स्म। स कदाचिन्माघमासे सौम्यानिले प्रवाति मेघाच्छादिते गगने मन्दं मन्दं प्रवर्षति पर्जन्ये पशुप्रार्थनाय किंचिद्ग्रामान्तरं गतः। कश्चिद्यजमानो याचितः। भो यजमान आगामिन्याममावास्यायामहं यक्ष्यामि यज्ञं। तद्देहि मे पशुमेकं। अथ तेन तस्य शास्त्रोक्तः पीवरतनुः पशुः प्रदत्तः। सो ऽपि तं समर्थमितश्चेतश्च गच्छन्तं विज्ञाय स्कन्धे कृत्वा सत्वरं स्वपुराभिमुखः प्रतस्थे। अथ तस्य गच्छतो मार्गे त्रयो धूर्ताः क्षुत्क्षामकण्ठाः सम्मुखा बभूवुः। तैश्च तादृशं पीवरतनुं पशुं स्कन्धआरूढमवलोक्य मिथो ऽभिहितं। अहो अस्य पशोर्भक्षणादद्यतनीयो हिमपातो व्यर्थतां नीयते। तदेनं वञ्चयित्वा पशुमादाय शीतत्राणं कुर्मः। अथ तेषामेकतमो वेषपरिवर्तनं विधाय सम्मुखो भूत्वापमार्गेण तमाहिताग्निमूचे। भो भो बालाग्निहोत्रिन् किमेवं जनविरुद्धं हास्यकार्यमनुष्ठीयते। यदेष सारमेयो ऽपवित्रः स्कन्धाधिरूढो नीयते। उक्तं च यतः।

श्वानकुक्कुटचाण्डालाः समस्पर्शाः प्रकीर्तिताः।
रासभोष्ट्रौ विशेषेण तस्मात् तान्नैव संस्पृशेत् ॥११८॥

ततश्च तेन कोपाभिभूतेनाभिहितं। अहो किमन्धो भवान्। यत् पशुं सारमेयं प्रतिपादयसि। सो ऽब्रवीत्। ब्रह्मन् कोपस्त्वया न कार्यः। यथेच्छया गम्यतामिति। अथ यावत् किंचिदध्वनो ऽन्तरं गच्छति। तावद्द्वितीयो धूर्तः सम्मुखः समुपेत्य तमुवाच। भो ब्रह्मन् कष्टं कष्टं। यद्यपि वल्लभो ऽयं ते मृतवत्सः। तथापि स्कन्धमारोपयितुम्

युक्तं। उक्तं च यतः।

तिर्यञ्चं मानुषं वापि यो मृतं संस्पृशेत् कुधीः।
पञ्चगव्येन शुद्धिः स्यात् तस्य चन्द्रायणेन च ॥११९॥

अथासौ सकोपमिदमाह। भोः किमन्धो भवान्। यत् पशुं मृतवत्सं वदसि। सो ऽब्रवीत्। भगवन् मा कोपं कुरु। अज्ञानान्मयाभिहितं। तत् त्वमात्मरुचिरं समाचरेति। अथ यावत् स्तोकं वनान्तरं गच्छति। तावत् तृतीयो ऽन्यवेषधारी धूर्तः सम्मुखः समुपेत्य तमुवाच। भो अयुक्तमेतत्। यत् त्वं रासभं स्कन्धाधिरूढं नयसि। तत् त्यज्यतामेष। उक्तं च। यः स्पृशेद्रासभं मर्त्यो ज्ञानादज्ञानतो ऽपि वा।
सचैलं स्नानमुद्दिष्टं तस्य पापप्रशान्तये ॥१२०॥

तत् त्यजैनं यावदन्यः कश्चिन्न पश्यति। अथासौ तं पशुं रासभं मन्यमानो भयाद्भूमौ प्रक्षिप्य स्वगृहमुद्दिश्य प्रपलायितः। ततस्ते त्रयो मिलित्वा तं पशुमादाय यथेच्छया भक्षितुमारब्धाः। अतो ऽहं ब्रवीमि।

बहुबुद्धिसमायुक्ताः सुविज्ञाना बलोत्कटान्।
शक्ता वञ्चयितुं धूर्ता ब्राह्मणं छागलादिव ॥१२१॥

अथवा साध्विदमुच्यते।

अभिनवसेवकविनयैः प्राघुणकोक्तैर्विलासिनीरुदितैः।
धूर्तजनवचननिकरैरिह कश्चिदवञ्चितो नास्ति ॥१२२॥

किञ्च दुर्बलैरपि बहुभिः सह विरोधो न युक्तः। उक्तं च।

बहवो न विरोद्धव्या दुर्जया हि महाजनाः।
स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपीलिकाः ॥१२३॥

कथा ॥४॥ मेघवर्ण आह। कथमेतत्। स्थिरजीवी कथयति। अस्ति कस्मिंश्चिद्वल्मीके महाकायः कृष्णसर्पो ऽतिदर्पो नाम। स कदाचिद्बिलानुसारमार्गमुत्सृज्यान्येन लघुद्वारेण निष्क्रमितुमारब्धः। निष्क्रामतश्च तस्य महाकायत्वाद्दैववशतया लघुविवरत्वाच्च शरीरे व्रणः समुत्पन्नः।

अथ व्रणशोणितगन्धानुसारिणीभिः पिपीलिकाभिः सर्वतो व्याप्तो व्याकुलीकृतश्च। कति व्यापादयति कति वा ताडयति। अथ प्रभूतत्वाद्विस्तारितबहुव्रणाभिः क्षतसर्वाङ्गो ऽतिदर्पः पञ्चत्वमुपागतः। अतोऽहं ब्रवीमि।

बहवो न विरोद्धव्या दुर्जया हि महाजनाः।
स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपीलिकाः ॥१२४॥

तदत्रास्ति किंचिन्मे वक्तव्यमेव। तदवधार्य यथोक्तमनुष्ठीयतां। मेघवर्ण आह। तत् समादेशय। त्वदादेशो नान्यथा कर्तव्यः। स्थिरजीवी प्राह। वत्स समाकर्णय तर्हि सामादीनतिक्रम्य यो मया पञ्चम उपायो निरूपितः। तन्मां विपक्षभूतं कृत्वा। अतिनिष्ठुरवचनैर्निर्भर्त्स्य। यथा विपक्षप्रणिधीनां प्रत्ययो भवति। तथा समाहृतरुधिरैरालिप्य। अस्यैव न्यग्रोधस्याधस्तात् प्रक्षिप्य मां। गम्यतां पर्वतं ऋष्यमूकं प्रति। तत्र सपरिवारस्तिष्ठ। यावदहं समस्तान् सपत्नान् सुप्रणीतेन विधिना विश्वास्याभिमुखान् कृत्वा। कृतार्थो ज्ञातदुर्गमध्यः दिवसे तानन्धतां प्राप्तान् ज्ञात्वा व्यापादयामि। ज्ञातं मया सम्यक्। नान्यथास्माकं सिद्धिरिति। यतो दुर्गमेतदपसाररहितं केवलं वधाय भविष्यति। उक्तं च यतः।

अपसारसमायुक्तं नयज्ञैर्दुर्गमुच्यते।
अपसारपरित्यक्तं दुर्गव्याजेन बन्धनं ॥१२५॥

न च त्वया मदर्थं कृपा कार्या। उक्तं च।

अपि प्राणसमानिष्टान् पालितान् लालितानपि।
भृत्यान् युद्धे समुत्पन्ने पश्येच्छुष्कमिवेन्धनं ॥१२६॥

तथा च। प्राणवद्रक्षयेद्भृत्यान् स्वकायमिव पोषयेत्।
सदैकदिवसस्यार्थे यत्र स्याद्रिपुसङ्गमः ॥१२७॥

तत् त्वयाहं नात्रविषये प्रतिषेधनीयः। इत्युक्त्वा तेन सह शुष्ककलहं

कर्तुमारब्धः। अथान्ये तस्य भृत्याः स्थिरजीविनमुच्छृङ्खलवचनैर्जल्पन्तमवलोक्य तस्य बधायोद्यता मेघवर्णेनाभिहिताः। अहो निवर्तध्वं यूयं। अहमेवास्य शत्रुपक्षपातिनो दुरात्मनः स्वयं निग्रहं करिष्यामि। इत्यभिधाय तस्योपरि समारुह्य। लघुभिश्चञ्चुप्रहारैस्तं प्रहृत्य। आहृतरुधिरेण प्लावयित्वा। तदुपदिष्टं ऋष्यमूकपर्वतं सपरिवारो गतः। एतस्मिन्नन्तरे कृकालिकया द्विषत्प्रणिधीभूतया तत् सर्वं मेघवर्णस्यामात्यस्य व्यसनमुलूकराज्ञो निवेदितं। यत् तवारिः सम्प्रति भीतः क्वचित् प्रचलितः सपरिवार इति। अथोलूकाधिपस्तदाकर्ण्यास्तमनवेलायां सामात्यः सपरिजनो वायसबधार्थं प्रचलितः। प्राह च। त्वर्यतां त्वर्यतां। भीतः शत्रुः पलायनपरः पुण्यैर्लभ्यते। उक्तं च।

शत्रोः प्रचलने छिद्रमेकमन्यच्च संश्रयं।
कुर्वाणो जायते वश्यो व्यग्रत्वे राजसेविनां॥१२८॥

एवं ब्रुवाणः समन्तान्न्यग्रोधपादपमधः परिवेष्ट्य व्यवस्थितः। यावन्न कश्चिद्वायसो दृश्यते। तावच्छाखाग्रमधिरूढो हृष्टमना वन्दिभिरभिष्टूयमानो ऽरिमर्दनस्तान् परिजनां प्रोवाच। अहो ज्ञायतां तेषां मार्गः। कतमेन मार्गेण प्रनष्टाः काकाः। तद्यावन्न दुर्गं समाश्रयन्ति। तावदेव पृष्ठतो गत्वा व्यापादयामि। उक्तं च।

वृतिमप्याश्रितः शत्रुर्वध्यः स्याज्जिगीषुणा।
किं पुनः संश्रितो दुर्गं सामग्र्या परया युतं॥१२९॥

अथैतस्मिन् प्रस्तावे स्थिरजीवी चिन्तयामास। यद्येते ऽस्मच्छत्रवो ऽनुपलब्धास्मद्वृत्तान्ता यथागतमेव यान्ति। ततो मया न किञ्चित् कृतं भवति। उक्तं च।

अनारम्भो हि कार्याणां प्रथमं बुद्धिलक्षणं।
प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणं॥१३०॥

तद्वरमनारम्भो न चारम्भविघातः। तदहमेतान् शब्दं संश्राव्यात्मानं

दर्शयामीति विचार्य मन्दं मन्दं शब्दमकरोत्। तच्छ्रुत्वा ते सकला अप्युलूकास्तद्वधाय प्रजग्मुः। अथ तेनोक्तं। अहो अहं स्थिरजीवी नाम मेघवर्णस्य मन्त्री। मेघवर्णेनैवेदृशीमवस्थां नीतः। तन्निवेद्यतात्मस्वाम्यग्रे। तेन सह बहु वक्तव्यमस्ति। अथ तैर्निवेदिते स उलूकराजो विस्मयाविष्टस्तत्क्षणात् तस्य सकाशं गत्वा प्रोवाच। भो भो किमेतां दशां गतस्त्वं। तत् कथ्यतां। स्थिरजीवी प्राह। देव श्रूयतां तदवस्थाकारणं। अतीतदिने स दुरात्मा मेघवर्णो युष्मद्व्यापादितप्रभूतवायसानां पीडया युष्माकमुपरि कोपशोकग्रस्तो युद्धार्थं प्रचलित आसीत्। ततो मयाभिहितं। स्वामिन् न युक्तं भवतस्तदुपरि गन्तुं। बलवन्त एते बलहीनाश्च वयं। उक्तं च।

बलीयसा हीनबलो विरोधं न भूतिकामो मनसापि वाञ्छेत्।
न बध्यते ऽत्यन्तबलो हि यस्माद्व्यक्तं प्रणाशो ऽस्ति पतङ्गवृत्तेः ॥

तत् तस्योपप्रदानेन सन्धिरेव युक्तः। उक्तं च।

बलवन्तं रिपुं दृष्ट्वा सर्वस्वमपि बुद्धिमान्।
दत्त्वा हि रक्षयेत् प्राणान् रक्षितैस्तैर्धनं पुनः ॥१३२॥

तच्छ्रुत्वा तेन दुर्जनप्रकोपितेन त्वत्पक्षपातिनं मामाशङ्कमानेनेमां दशां नीतः। तत् तव पादौ साम्प्रतं मे शरणं। किं बहुना विज्ञप्तेन। यावदहं प्रचलितुं शक्नोमि। तावत् त्वां तस्यावासे नीत्वा सर्ववायसक्षयं विधास्यामीति। अथारिमर्दनस्तदाकर्ण्य पितृपितामहक्रमागतमन्त्रिभिः सार्धं मन्त्रयां चक्रे। तस्य च पञ्च मन्त्रिणः। तद्यथा रक्ताक्षः क्रूराक्षो दीप्ताक्षो वक्रनासः प्राकारकर्णश्चेति। तत्रादौ रक्ताक्षमपृच्छत्। भद्र एष तावत् तस्य रिपोर्मन्त्री मम हस्तगतः। तत् किं क्रियतामिति। रक्ताक्ष आह। देव किमत्र चिन्त्यते। अविचारितमयं हन्तव्यः। यतः

हीनः शत्रुर्निहन्तव्यो यावन्न बलवान् भवेत्।
प्राप्तस्वपौरुषबलः पश्चाद्भवति दुर्जयः ॥१३३॥

किञ्च स्वयमुपागता श्रीस्त्यज्यमाना शपतीति लोके प्रवादः। उक्तं च।

कालो हि सकृदभ्येति यन्नरं कालकाङ्क्षिणं।
दुर्लभः स पुनस्तेन कालकर्मचिकीर्षता ॥१३४॥

श्रूयते च यथा।

चितिकां दीपितां पश्य स्फुटां भग्नां ममैव च।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्धते ॥१३५॥

कथा ॥५॥ अरिमर्दनः प्राह। कथमेतत्। रक्ताक्षः कथयति। अस्ति कस्मिंश्चिदधिष्ठाने हरिदत्तो नाम ब्राह्मणः। तस्य च कृषिं कुर्वतः सदैव निष्फलः कालो ऽतिवर्तते। अथैकस्मिन् दिवसे स ब्राह्मण उष्णकालावसाने घर्मार्त्तः स्वक्षेत्रमध्ये वृक्षछायायां प्रसुप्तः। अनतिदूरे वल्मीकोपरि प्रसारितं बृहत्स्फुटाटोपं भीषणं भुजङ्गमं दृष्ट्वा चिन्तयामास। नूनमेषा क्षेत्रदेवता मया कदाचिदपि न पूजिता। तेनेदं मे कृषिकर्म विफलीभवति। तदस्या अहं पूजामद्य करिष्यामीत्यवधार्य कुतो ऽपि क्षीरं याचित्वा। शरावे निक्षिप्य। वल्मीकान्तिकमुपागम्योवाच। भो क्षेत्रपाल मयैतावन्तं कालं न ज्ञातं यत् त्वमत्र वससि। तेन पूजा न कृता। तत् साम्प्रतं क्षमस्वेत्येवमुक्त्वा। दुग्धं च निवेद्य। गृहाभिमुखं प्रायात्। अथ प्रातर्यावदागत्य पश्यति। तावद्दीनारमेकं शरावे दृष्टवान्। एवं च प्रतिदिनमेकाकी समागत्य तस्मै क्षीरं ददाति। एकैकं च दीनारं गृह्णाति। अथैकस्मिन् दिवसे वल्मीके क्षीरनयनाय पुत्रं निरूप्य ब्राह्मणो ग्रामं जगाम। पुत्रो ऽपि क्षीरं तत्र नीत्वा संस्थाप्य च पुनर्गृहं समायातः। दिनान्तरे तत्र गत्वा दीनारमेकं च दृष्ट्वा गृहीत्वा च चिन्तितवान्। नूनं सौवर्णदीनारपूर्णो ऽयं वल्मीकः। तदेनं हत्वा सर्वमेकवारं ग्रहीष्यामीत्येवं सम्प्रधार्यान्येद्युः क्षीरं ददता ब्राह्मणपुत्रेण सर्पो लगुडेन शिरसि ताडितः। ततः कथमपि दैववशादमुक्तजीवित एव रोषात् तमेव तीव्रविषदशनैस्तथादशत्।

यथा सद्यः पञ्चत्वमुपागतः। स्वजनैश्च नातिदूरे क्षेत्रस्य काष्ठसञ्चयैः संस्कृतः। अथ द्वितीयदिने तस्य पिता समायातः। स्वजनेभ्यः सुतविनाशकारणं श्रुत्वा तथैव समर्थितवान्। अब्रवीच्च।

भूतान् यो नानुगृह्णाति ह्यात्मनः शरणागतान्।
भूतार्थास्तस्य नश्यन्ति हंसाः पद्मवने यथा ॥१३६॥

पुरुषैरुक्तं। कथमेतत्। ब्राह्मणः कथयति। अस्ति कस्मिंश्चिदधिष्ठाने चित्ररथो नाम राजा। तस्य योधैः सुरक्ष्यमाणं पद्मसरो नाम ॥६।
सरस्तिष्ठति। तत्र च प्रभूता जाम्बूनदमया हंसास्तिष्ठन्ति। षण्मासे षण्मासे पिच्छमेकैकं परित्यजन्ति। अथ तत्र सरसि सौवर्णो वृहत्पक्षी समायातः। तैश्चोक्तः। अस्माकं मध्ये त्वया न वर्तव्यं। येन कारणे नास्माभिः पन्मासान्ते पिच्छैकैकदानं कृत्वा गृहीतमेतत् सरः। एवं च किं बहुना परस्परं द्वैधमुत्पन्नं। स च राज्ञः शरणं गतोऽब्रवीत्। देव एते पक्षिण एवं वदन्ति। यदस्माकं राजा किं करिष्यति। न कस्याप्यावासं दद्मः। मया चोक्तं। न शोभनं युष्माभिरभिहितं। अहं गत्वा राज्ञे निवेदयिष्यामि। एवं स्थिते देवः प्रमाणं। ततो राजा भृत्यानब्रवीत्। भो भो गच्छत। सर्वान् पक्षिणो गतासून् कृत्वा शीघ्रमानयत। राजादेशानन्तरमेव प्रचेलुस्ते। अथ लगुडहस्तान् राजपुरुषान् दृष्ट्वा तत्रैकेन पक्षिणा वृद्धेनोक्तं। भो स्वजना न शोभनमापतितं। ततः सर्वैरेकमतीभूय शीघ्रमुत्पतितव्यं। तैश्च तथानुष्ठितं। अतोऽहं ब्रवीमि।

भूतान् यो नानुगृह्णाति ह्यात्मनः शरणागतान्।
भूतार्थास्तस्य नश्यन्ति हंसाः पद्मवने यथा ॥१३७॥

इत्युक्त्वा पुनरपि ब्राह्मणः प्रत्यूषे क्षीरं गृहीत्वा। तत्र गत्वा तारस्वरेण सर्पमस्तौत्। तदा सर्पश्चिरं वल्मीकद्वारान्तर्लीन एव ब्राह्मणं प्रत्युवाच। त्वं लोभादत्रागतः पुत्रशोकमपि विहाय। इतः परं तव

मम च प्रीतिर्नोचिता। तव पुत्रेण यौवनोन्मदेनाहं ताडितः। मया स दष्टः। कथं मया लगुडप्रहारो ऽविस्मर्तव्यः। त्वया च पुत्रशोकदुःखं कथं विस्मर्तव्यं। इत्युक्का बहुमूल्यं हारकमणिं तस्मै दत्त्वा सृतः। परं पुनस्त्वया नागन्तव्यमिति पुनरुक्का विवरान्तर्गतः। ब्राह्मणश्च मणिं गृहीत्वा पुत्रबुद्धिं निन्दन् स्वगृहमागतः। अतो ऽहं ब्रवीमि।

चितिकां दीपितां पश्य स्फुटां भग्नां ममैव च।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्धते ॥१३८॥

तदस्मिन् हते यत्नादेव राज्यमकण्टकं भवतो भवति। तस्यैतद्वचनं श्रुत्वा क्रूराक्षं पप्रच्छ। भद्र त्वं तु किं मन्यसे। सो ऽब्रवीत्। देव निर्दयमेतत्। यदनेनाभिहितं। यत्कारणं शरणागतो न बध्यते। सुष्ठु खल्विदमाख्यातं।

श्रूयते हि कपोतेन शत्रुः शरणमागतः।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥१३९॥

अरिमर्दनो ऽब्रवीत्। कथमेतत्। क्रूराक्षः कथयति।

कथा ॥७॥

कश्चित् क्षुद्रसमाचारः प्राणिनां कालसन्निभः।
विचचार महारण्ये घोरः शकुनिलुब्धकः ॥१४०॥
नैव कश्चित् सुहृत् तस्य न सम्बन्धी न बान्धवः।
स तैः सर्वैः परित्यक्तस्तेन रौद्रेण कर्मणा ॥१४१॥

अथवा। ये नृशंसा दुरात्मानः प्राणिनां प्राणनाशकाः।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥१४२॥
स पञ्जरकमादाय पाशं च लगुडं तथा।
नित्यमेव वनं याति सर्वप्राणिविहिंसकः ॥१४३॥
अन्येद्युर्भ्रमतस्तस्य वने कापि कपोतिका।
ज्ञाता हस्तगता तां स प्राक्षिपत् पञ्जरान्तरे ॥१४४॥
अथ कृष्णा दिशः सर्वा वनस्थस्याभवन् घनैः।

वातवृष्टिश्च महती क्षयकाल इवाभवत् ॥ १४५ ॥
ततः संत्रस्तहृदयः कम्पमानो मुहुर्मुहुः ।
अन्वेषयन् परित्राणमाससाद वनस्पतिं ॥ १४६ ॥
मुहूर्तं पश्यते यावद्वियद्विमलतारकं ।
प्राप्य वृक्षं वदत्येव यो ऽत्र तिष्ठति कश्चन ॥ १४७ ॥
तस्याहं शरणं प्राप्तः स परित्रातु मामिति ।
शीतेन भिद्यमानं च क्षुधया गतचेतसं ॥ १४८ ॥
अथ तस्य तरोः स्कन्धे कपोतः सुचिरोषितः ।
भार्याविरहितस्तिष्ठन् विललाप सुदुःखितः ॥ १४९ ॥
वातवर्षो महानासीन्न चागच्छति मे प्रिया ।
तया विरहितं ह्येतच्छून्यमद्य गृहं मम ॥ १५० ॥
पतिव्रता पतिप्राणा पत्युः प्रियहिते रता ।
यस्य स्यादीदृशी भार्या धन्यः स पुरुषो भुवि ॥ १५१ ॥
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं हि गृहिणीहीनमरण्यसदृशं मतं ॥ १५२ ॥
पञ्जरस्था ततः श्रुत्वा भर्तुर्दुःखान्वितं वचः ।
कपोतिका सुसंतुष्टा वाक्यं चेदमथाह सा ॥ १५३ ॥
न सा स्त्रीत्यभिमन्तव्या यस्यां भर्ता न तुष्यति ।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वा देवताः ॥ १५४ ॥
दावाग्निनेव विदग्धा सपुष्पस्तवकालता ।
भस्मीभवतु सा नारी यस्यां भर्ता न तुष्यति ॥ १५५ ॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ १५६ ॥

पुनश्चाब्रवीत् ।

शृणुष्वावहित कान्त यत् ते वक्ष्याम्यहं हितं ।

प्राणैरपि त्वया नित्यं संरक्ष्यः शरणागतः ॥१५७॥
एष शाकुनिकः शेते तवावासं समाश्रितः ।
शीतार्तश्च क्षुधार्तश्च पूजामस्मै समाचर ॥१५८॥
श्रूयते च । यः सायमतिथिं प्राप्तं यथाशक्ति न पूजयेत् ।
तस्यासौ दुःकृतं दत्वा सुकृतं चापकर्षति ॥१५९॥
मा चास्मै त्वं कृथा द्वेषं बद्धानेनेति मत्प्रिया ।
स्वकृतैरेव बद्धाहं प्राक्तनकर्मबन्धनैः ॥१६०॥
यतः । दारिद्र्यरोगदुःखानि बन्धनव्यसनानि च ।
आत्मापराधवृक्षस्य फलान्येतानि देहिनां ॥१६१॥
तस्मात् त्वं द्वेषमुत्सृज्य मद्बन्धनसमुद्भवं ।
धर्मे मनः समाधाय पूजयैनं यथाविधि ॥१६२॥
तस्य तद्वचनं श्रुत्वा धर्मयुक्तिसमन्वितं ।
उपगम्य ततो ऽधृष्टः कपोतः प्राह लुब्धकं ॥१६३॥
भद्र सुस्वागतं ते ऽस्तु ब्रूहि किं करवाणि ते ।
सन्तापश्च न कर्तव्यः स्वगृहे वर्तते भवान् ॥१६४॥
तस्य तद्वचनं श्रुत्वा प्रत्युवाच विहङ्गमं ।
कपोत खलु शीतं मे हिमत्राणं विधीयतां ॥१६५॥
स गत्वाङ्गारकं नीत्वा पातयामास पावकं ।
ततः शुष्केषु पर्णेषु तमाशु समदीपयत् ॥१६६॥
सुसन्दीप्तं ततः कृत्वा तमाह शरणागतं ।
प्रतापयस्व विश्रब्धं स्वगात्राण्यत्र निर्भयः ।
न चास्ति विभवः कश्चिन्नाशये येन ते क्षुधं ॥१६७॥
सहस्रं भरते कश्चिच्छतमन्यो दशापरः ।
मम त्वकृतपुण्यस्य क्षुद्रस्यात्मापि दुर्भरः ॥१६८॥
एकस्याप्यतिथेरन्नं यः प्रदातुं न शक्तिमान् ।

तस्यानेकपरिक्लेशे गृहे किं वसतः फलं ॥१६९॥
तत् तथा साधयाम्येतच्छरीरं दुःखजीवितं ।
यथा भूयो न वक्ष्यामि नास्तीत्यर्थिसमागमे ॥१७०॥
स निनिन्द किलात्मानं न तु तं लुब्धकं पुनः ।
उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय ॥१७१॥
एवमुक्त्वा स धर्मात्मा प्रहृष्टेनान्तरात्मना ।
तमग्निं सम्परिक्रम्य प्रविवेश स्ववेश्मवत् ॥१७२॥
ततस्तं लुब्धको दृष्ट्वा कृपया पीडितो भृशं ।
कपोतमग्नौ पतितं वाक्यमेतदभाषत ॥१७३॥
यः करोति नरः पापं न तस्यात्मा ध्रुवं प्रियः ।
आत्मना हि कृतं पापमात्मनैव हि भुज्यते ॥१७४॥
सो ऽहं पापमतिश्चैव पापकर्मरतः सदा ।
पतिष्यामि महाघोरे नरके नात्र संशयः ॥१७५॥
नूनं मम नृशंसस्य प्रत्यादर्शः सुदर्शितः ।
प्रयच्छता स्वांसानि कपोतेन महात्मना ॥१७६॥
अथ प्रभृति देहं स्वं सर्वभोगविवर्जितं ।
तोयं स्वल्पमिव ग्रीष्मे शोषयिष्याम्यहं ॥१७७॥
शीतवातातपसहः कृशाङ्गो मलिनस्तथा ।
उपवासैर्बहुविधैश्चरिष्ये धर्ममुत्तमं ॥१७८॥
ततो यष्टिं शलाकां च जालकं पञ्जरं तथा ।
बभञ्ज लुब्धको दीनां कपोतीं च मुमोच तां ॥१७९॥
लुब्धकेन ततो मुक्ता दृष्ट्वाग्नौ पतितं पतिं ।
कपोती विललापार्ता शोकसन्तप्तमानसा ॥१८०॥
न कार्यमद्य मे नाथ जीवितेन त्वया विना ।
दीनायाः परिहीणायाः किं नार्या जीविते फलं ॥१८१॥

मनोदर्पस्त्वहङ्कारः कुलपूजा च बन्धुषु ।
दासभृत्यजनेष्वाज्ञा वैधव्येन प्रणश्यति ॥ १८२ ॥
एवं विलप्य बहुशः कृपणं भृशदुःखिता ।
पतिव्रता सुसन्दीप्तं तमेवाग्निं विवेश सा ॥ १८३ ॥
ततो दिव्याम्बरधरा दिव्याभरणभूषिता ।
भर्तारं सा विमानस्थं ददर्श स्वं कपोतिका ॥ १८४ ॥
सो ऽपि दिव्यतनुर्भूत्वा यथार्थमिदमब्रवीत् ।
अहो मामनुगच्छन्त्या कृतं साधु शुभे त्वया ॥ १८५ ॥
तिस्रः कोट्यो ऽर्धकोटी च यानि रोमाणि मानुषे ।
तावत् कालं वसेत् स्वर्गे भर्तारं यानुगच्छति ॥ १८६ ॥
कपोतदेवः सूर्यास्तप्रत्यहं सुखमन्वभूत् ।
सा खं सौरं कपोतस्य प्राक्पुण्यप्रभवं हि तत् ॥ १८७ ॥
हर्षाविष्टस्ततो व्याधो विवेश स वनं घनं ।
प्राणिहिंसां परित्यज्य बहुनिर्वेदवान् भृशं ॥ १८८ ॥
तत्र दावानलं दृष्ट्वा विवेश विरताशयः ।
निर्दग्धकल्मषो भूत्वा स्वर्गसौख्यमवाप्तवान् ॥ १८९ ॥

अतो ऽहं ब्रवीमि ।

श्रूयते हि कपोतेन शत्रुः शरणागतः ।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ १९० ॥

तच्छ्रुत्वारिमर्दनो दीप्ताक्षं पृष्टवान् । एवमवस्थिते किं भवान् मन्यते । सो ऽब्रवीत् । देव न हन्तव्य एवायं । यतः ।

या ममोद्विजते नित्यं सा मामद्यावगूहते ।
प्रियकारक भद्रं ते यन्ममास्ति हरस्व तत् ॥ १९१ ॥

चौरेण चाप्युक्तं ।

हर्तव्यं ते न पश्यामि हर्तव्यं चेद्भविष्यति ।

पुनरप्यागमिष्यामि यदीयं नावगूहते ॥ ११२ ॥

अरिमर्दनः पृष्टवान्। का च नावगूहते। कश्चायं चौर इति विस्तरतः श्रोतुमिच्छामि। दीप्ताक्षः कथयति। अस्ति कस्मिंश्चिदधिष्ठाने कामातुरो नाम वृद्धवणिक्। तेन च कामोपहतचेतसा मृतभार्येण काचिन्निर्धनवणिक्सुता प्रभूतं धनं दत्त्वोद्वाहिता। अथ सा दुःखाभिभूता तं वृद्धवणिजं द्रष्टुमपि न शशाक। युक्तं चैतत्।

श्वेतं पदं शिरसि यत्तु शिरोरुहाणां।
स्थानं परं परिभवस्य तदेव पुंसां ॥ ११३ ॥
आरोपितास्थिशकलं परिहृत्य यान्ति।
चाण्डालकूपमिव दूरतरं तरुण्यः ॥ ११४ ॥

तथा च। गात्रं सङ्कुचितं गतिर्विगलिता दन्ताश्च नाशं गताः।
दृष्टिर्भ्रश्यति रूपमप्युपहतं वक्त्रं च लालायते।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते।
धिक् कष्टं जरयाभिभूतपुरुषं पुत्रो ऽप्यवज्ञायते ॥ ११५ ॥

अथ कदाचित् सा तेन सहैकशयने पराङ्मुखी यावत् तिष्ठति। तावद्गृहे चौरः प्रविष्टः। सापि तं चौरं दृष्ट्वा भयव्याकुलिता वृद्धमपि तं पतिं गाढं समालिलिङ्ग। सो ऽपि विस्मयात् पुलकाङ्कितसर्वगात्रश्चिन्तयामास। अहो किमेषा मामद्यावगूहते। यावन्निपुणतया पश्यति। तावद्गृहकोणैकदेशे चौरं दृष्ट्वा व्यचिन्तयत्। नूनमेषास्य भयान्मामालिङ्गतीति ज्ञात्वा तं चौरमाह।

या ममोद्विजते नित्यं सा मामद्यावगूहते।
प्रियकारक भद्रं ते यन्ममास्ति हरस्व तत् ॥ ११६ ॥

तच्छ्रुत्वा चौरो ऽप्याह।

कर्तव्यं ते न पश्यामि कर्तव्यं चेद्भविष्यति।
पुनरप्यागमिष्यामि यदीयं नावगूहते ॥ ११७ ॥

तस्माच्चौरस्याप्युपकारिणः श्रेयश्चिन्त्यते। किं पुनर्न शरणागतस्य। अपि चायं तैर्विप्रकृतो ऽस्माकमेव पुष्टये भविष्यति तदीयरन्ध्रदर्शनाय चेति। अनेन कारणेनायमबध्य इति। एतदाकर्ण्यारिमर्दनो ऽन्यं सचिवं वक्रनासं पप्रच्छ। भद्र साम्प्रतमेवं स्थिते किं कर्तव्यं। सो ऽब्रवीत्। देव अबध्यो ऽयं। यतः।

शत्रवो ऽपि हितायैव विवदन्तः परस्परं।
चौरेण जीवितं दत्तं राक्षसेण तु गोयुगं ॥१९८॥

अरिमर्दनः प्राह। कथमेतत्। वक्रनासः कथयति। अस्ति कस्मिंश्चिदधिष्ठाने दरिद्रो द्रोणनामा ब्राह्मणः प्रतिग्रहधनः सततं विशिष्टवस्त्रानुलेपनगन्धमाल्यालङ्कारताम्बूलादिभोगपरिवर्जितः प्ररूढकेशश्मश्रुनखरोमोपचितः शीतोष्णवातवर्षादिभिः परिशोषितशरीरः। तस्य च केनापि यजमानेनानुकम्पया शिशुगोयुगं दत्तं। ब्राह्मणेन च बालभावादारभ्य याचितघृततैलयवसादिभिः संवर्ध्य सुपुष्टं कृतं। तच्च दृष्ट्वा सहसैव कश्चिच्चौरश्चिन्तितवान्। अहमस्य ब्राह्मणस्य गोयुगमिदमपहरिष्यामि। इति निश्चित्य निशायां बन्धनपाशं गृहीत्वा यावत् प्रस्थितः। तावदर्धमार्गे प्रविरलतीक्ष्णदन्तपङ्क्तिरुन्नतनासावंशो प्रकटरक्तान्तनयनोपचितस्नायुसन्ततिर्नतगात्रः शुष्ककपोलः सुहुतहुतवहपिङ्गश्मश्रुकेशशरीरः कश्चिद्दृष्टः। दृष्ट्वा च तं तीव्रभयोत्त्रस्तो ऽपि चौरो ऽब्रवीत्। को भवानिति। स आह। सत्यवचनो ऽहं ब्रह्मराक्षसः। भवानप्यात्मानं निवेदयतु। सो ऽब्रवीत्। अहं क्रूरकर्मा चौरः। दरिद्रब्राह्मणस्य गोयुगं हर्तुं प्रस्थितो ऽस्मि। अथ जातप्रत्ययो राक्षसो ऽब्रवीत्। भद्र षष्ठान्नकालिको ऽहं। अतस्तमेव ब्राह्मणमद्य भक्षयिष्यामि। तत् सुन्दरमिदं। एककार्यावेवावां। अथ तौ तत्र गत्वैकान्ते कालमन्वेषयन्तौ स्थितौ। प्रसुप्ते च ब्राह्मणे तद्भक्षणार्थं प्रस्थितं राक्षसं दृष्ट्वा चौरो ऽब्रवीत्। भद्र नैष न्यायः। यतो गोयुगे

मयापहृते पश्चात् त्वमेनं ब्राह्मणं भक्षय। सो ऽब्रवीत्। कदाचिदयं ब्राह्मणो गोशब्देन बुध्येत। तदानर्थको ऽयं ममारम्भः स्यात्। चौरो ऽप्यब्रवीत्। तवापि यदि भक्षणायोपस्थितस्यान्तर एको ऽप्यन्तरायः स्यात्। तदाहमपि न शक्नोमि गोयुगमपहर्तुं। अतः प्रथमं मयापहृते गोयुगे पश्चात् त्वया ब्राह्मणो भक्षयितव्यः। इत्थं चाहमहमिकया तयोर्विवदतोः समुत्पन्ने द्वैधे प्रतिरववशाद्ब्राह्मणो जजागार। अथ तं चौरो ऽब्रवीत्। ब्राह्मण त्वामेवायं राक्षसो भक्षयितुमिच्छति। राक्षसो ऽप्याह। ब्राह्मण चौरो ऽयं गोयुगं ते पहर्तुमिच्छति। एवं श्रुत्वो त्थाय ब्राह्मणः सावधानो भूत्वेष्टदेवतामन्त्राध्यायेनात्मानं रक्षसादुद्गूर्ण लगुडेन चौराद्गोयुगं ररक्ष। अतो ऽहं ब्रवीमि।

शत्रवो ऽपि हितायैव विवदन्तः परस्परं।
चौरेण जीवितं दत्तं राक्षसेण तु गोयुगं ॥१९९॥

अथ तस्य वचनमवधार्यारिमर्दनः पुनरपि प्राकारकर्णमपृच्छत्। कथय किमत्र मन्यते भवान्। सो ऽब्रवीत्। देव अवध्य एवायं। यतो रक्षितेनानेन कदाचित् परस्परप्रीत्या कालः सुखेन गच्छति। उक्तं च।

परस्परस्य मर्माणि ये न रक्षन्ति जन्तवः।
त एव निधनं यान्ति वल्मीकोदरसर्पवत् ॥२००॥

अरिमर्दनो ऽब्रवीत्। कथमेतत्। प्राकारकर्णः कथयति। अस्ति कथ
कस्मिंश्चिन्नगरे देवशक्तिर्नाम राजा। तस्य च पुत्रो जठरवल्मीकाश्रये ॥१
णोरगेण प्रतिदिनं प्रत्यङ्गं क्षीयते। अनेकोपकारैः सद्वैद्यैः सच्छास्त्रोप
दिष्टौषधयुक्त्यापि चिकित्स्यमाणो न स्वास्थ्यमाप्नोति। अथासौ राजपुत्रो
निर्वेदाद्देशान्तरं गतः। कस्मिंश्चिन्नगरे भिक्षाटनं कृत्वा महति देवालये
कालं यापयति। अथ तत्र नगरे बलिर्नाम राजास्ते। तस्य च द्वे
दुहितरौ यौवनस्थे तिष्ठतः। ते च प्रतिदिवसमादित्योदये पितुः पा

दान्तिकमागत्य नमस्कारं चक्रतुः। तत्र चैकाब्रवीत्। विजयस्व महाराज यस्य प्रदानात् सर्वं सुखं लभ्यते। द्वितीया तु विहितं भुङ्क्ष्व महाराजेति ब्रवीति। तच्छ्रुत्वा प्रकुपितो राजाब्रवीत्। भो मन्त्रिण एनां दुष्टभाषिणीं कुमारिकां कस्यचिद्वैदेशिकस्य प्रयच्छत। येन निजविहितमियमेव भुङ्क्ते। अथ तथेति प्रतिपद्याल्पपरिवारा सा कुमारिका मन्त्रिभिस्तस्य देवकुलाश्रितराजपुत्रस्य प्रतिपादिता। सापि प्रहृष्टमानसा तं पतिं दैववत् प्रतिपद्यादाय चान्यविषयं गता। ततः कस्मिंश्चिद्दूरतरनगरप्रदेशे तडागतटे राजपुत्रमावासरक्षायै निरूप्य। स्वयं च घृततैललवणतण्डुलादिक्रयनिमित्तं सपरिवारा गता। कृत्वा च क्रयविक्रयं यावदागच्छति। तावत् स राजपुत्रो वल्मीकोपरिकृतमूर्धा प्रसुप्तः। तस्य च मुखाद्भुजगः फणान्निष्क्रम्य वायुमश्नाति। तत्रैव च वल्मीके ऽपरः सर्पो निष्क्रम्य तथैवासीत्। अथ तयोः परस्परदर्शनेन क्रोधसंरक्तलोचनयोर्मध्याद्वल्मीकस्थेन सर्पेणोक्तं। भो भो दुरात्मन् कथं सुन्दरसर्वाङ्गं राजपुत्रमित्थं कदर्थयसि। मुखस्थो ऽहिरब्रवीत्। भो भो त्वयापि दुरात्मनास्य वल्मीकस्य मध्ये कथमिदं दूषितं हाटकपूर्णं कलशयुगलमित्येवं परस्परस्य मर्माण्युद्घाटितवन्तौ। पुनर्वल्मीकस्थो ऽहिरब्रवीत्। भो दुरात्मन् भेषजमिदं ते किं को ऽपि न जानाति। यज्जीर्णोत्कालितकाञ्जिकाराजिकापानेन भवान् विनाशमुपयाति। अथोदरस्थो ऽहिरब्रवीत्। तवाप्येतद्भेषजं किं कश्चिदपि न वेत्ति। यदुष्णतैलेन वा महोष्णोदकेन तव विनाशः स्यादिति। एवं च सा राजकन्या विटपान्तरिता तयोः परस्परालापान् मर्ममयानाकर्ण्य तथैवानुष्ठितवती। विधायाव्यङ्गं नीरोगं भर्तारं निधिं च परममासाद्य स्वदेशाभिमुखं प्रायात्। पितृमातृस्वजनैः प्रतिपूजिता विहितोपभोगं प्राप्य सुखेनाबस्थिता। अतो ऽहं ब्रवीमि।

परस्परस्य मर्माणि ये न रक्षन्ति जन्तवः ।

त एव निधनं यान्ति वल्मीकोदरसर्पवत् ॥२०१॥

तच्च श्रुत्वा स्वयमरिमर्दनो ऽप्येवं समर्थितवान्। तथा चानुष्ठितं दृष्ट्वान्तर्लीनं विहस्य रक्ताक्षः पुनरब्रवीत्। कष्टं कष्टं। विनाशितो ऽयं भवद्भिरन्यायेन स्वामी। उक्तं च।

अपूज्या यत्र पूज्यन्ते पूज्यानां तु विमानता।
त्रीणि तत्र प्रवर्तन्ते दुर्भिक्षं मरणं भयं ॥२०२॥

तथा च। प्रत्यक्षे ऽपि कृते पापे मूर्खः साम्ना प्रशाम्यति।
रथकारः स्वकां भार्यां सजारां शिरसावहत् ॥२०३॥

मन्त्रिणः प्राहुः। कथमेतत्। रक्ताक्षः कथयति। अस्ति कस्मिं कथा
श्चिदधिष्ठाने वीरधरो नाम रथकारः। तस्य भार्या कामदमिनी। सा ॥११॥
च पुंश्चली जनापवादसंयुक्ता च। सो ऽपि तस्याः परीक्षणार्थं व्यचिन्तयत्। कथं मयास्याः परीक्षणं कर्तव्यं। उक्तं च यतः।

यदि स्यात् पावकः शीतः प्रोष्णो वा शशलाञ्छनः।
स्त्रीणां च तत् सतीत्वं स्याद्यदि वा दुर्जनो हितः ॥२०४॥

जानामि चैनां लोकवचनादसतीं। उक्तं च।

यच्च वेदेषु शास्त्रेषु न दृष्टं न च संश्रुतं।
तत् सर्वं वेत्ति लोको ऽयं यत् स्याद्ब्रह्माण्डमध्यगं ॥२०५॥

एवं सम्प्रधार्य भार्यामवोचत्। प्रिये प्रभाते ऽहं ग्रामान्तरं यास्यामि। तत्र कतिचिद्दिनानि लगिष्यन्ति। तत् त्वया किमपि पाथेयं मम योग्यं विधेयं। सापि तद्वचनं श्रुत्वा हर्षितचित्ता सौत्सुक्या सर्वकार्याणि सन्त्यज्य सिद्धमन्नं घृतशर्कराप्रायमकरोत्। अथवा साध्विदमुच्यते।

दुर्दिवसे घनतिमिरे वर्षति जलदे महाटवीप्रभृतौ।
पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥२०६॥

अथासौ प्रत्यूष उत्थाय स्वगृहान्निर्गतः। सापि तं प्रस्थितं विज्ञाय प्रहसितवदनाङ्गसंस्कारकर्म कुर्वाणा कथञ्चित् तद्दिनमत्यवाहयत्।

अथ पूर्वपरिचितविटगृहे गत्वा तं प्रत्युक्तवती । स दुरात्मा मे पतिर्ग्रामान्तरं गतः । तत् त्वयास्मद्गृहे प्रसुते जने समागन्तव्यं । तथानुष्ठिते स रथकारो ऽरण्ये दिनमतिवाह्य प्रदोषे स्वगृहे ऽपरद्वारेण प्रविश्य शय्याधस्तले निभृतो भूत्वा स्थितः । एतस्मिन्नन्तरे स देवदत्तः समागत्य तत्र शयन उपविष्टः । तं दृष्ट्वा रोषाविष्टचित्तो रथकारो व्यचिन्तयत् । किमेनमुत्थाय हन्मि । अथवा हेलयैव प्रसुप्तौ द्वावप्येतौ व्यापादयामि । परं पश्यामि तावदस्याश्चेष्टितं । शृणोमि चानेन सहालापान् । अत्रान्तरे सा गृहद्वारं निभृतं विधाय शयनतलमारूढा । अथ तस्यास्तत्रारोहन्त्या रथकारशरीरे पादो विलग्नः । ततः सा व्यचिन्तयत् । नूनमेतेन दुरात्मना रथकारेण मत्परीक्षणार्थं भाव्यं । ततः स्त्रीचरितविज्ञानं किमपि करोमि । एवं तस्याश्चिन्तयन्त्याः देवदत्तः स्पर्शोत्सुको बभूव । अथ तया कृताञ्जलिपुटयाभिहितं । भो महानुभाव न मे शरीरं त्वया स्पर्शनीयं । यतो ऽहं पतिव्रता महासती च । न चेच्छापं दत्त्वा त्वां भस्मसात् करिष्यामि । स आह । यद्येवं तर्हि त्वया किमहमाहूतः । साब्रवीत् । भो शृणुष्वैकाग्रमनाः । अहमद्य प्रत्यूषे देवतादर्शनार्थं चण्डिकायतनं गता । तत्राकस्मात् खे वाणी सञ्जाता । पुत्रि किं करोमि । भक्तासि मे त्वं । परं षण्मासाभ्यन्तरे विधिनियोगाद्विधवा भविष्यसि । ततो मयाभिहितं । भगवति यथा त्वमापदं वेत्सि तथा तत्प्रतीकारमपि जानासि । तदस्ति कश्चिदुपायो येन मे पतिः शतसंवत्सरजीवी भवति । ततस्तयाभिहितं । अपि चास्ति । यतस्त्वदायत्तः स प्रतीकारः । तच्छ्रुत्वा मयाभिहितं । देवि यदि तन्मम प्राणैर्भवति तदादेशय येन करोमि । अथ देव्याभिहितं । यद्यद्यदिने परपुरुषेण सहैकस्मिन् शयने समारुह्यालिङ्गनं करोषि । तत् तव भर्तुः सक्तो ऽपमृत्युस्तस्य सञ्चरति । भर्तापि पुनर्वर्षशतं जीवति । तेन त्वं मयाभ्यर्थितः । तद्यत् किञ्चित् कर्तुमनास्तत् कुरुष्व ।

न हि देवतावचनमन्यथा भविष्यतीति निश्चयः। ततो ऽन्तर्हासविकाशमुखः स तदुचितमाचचार। सो ऽपि रथकारो मूर्खस्तस्यास्तद्वचनमाकर्ण्य पुलकाङ्किततनुः शय्याधस्तलान्निष्क्रम्य तामुवाच। साधु पतिव्रते। साधु कुलनन्दने। अहं दुर्जनवचनशङ्कितहृदयस्त्वत्परीक्षानिमित्तं ग्रामान्तरव्याजं कृत्वात्र खट्वाधस्तले निभृतं लीनः। तदेह्यालिङ्गय मां। त्वं स्वभर्तृभक्तानां मुख्यानारीणां यदेव ब्रह्मव्रतं परसङ्गे ऽपि पालितवती। मदायुर्वृद्धिकृते ऽपमृत्युविनाशार्थं च त्वमेवं कृतवती। तामेवमुक्त्वा सस्नेहमालिङ्गितवान्। स्वस्कन्धे तामारोप्य तमपि देवदत्तमुवाच। भो महानुभाव मत्पुण्यैस्त्वमिहागतः। त्वत्प्रसादान्मया प्राप्तं वर्षशतप्रमाणमायुः। तत् त्वमपि मामालिङ्ग्य मत्स्कन्धे समारुह। इति जल्पन्ननिच्छन्तमपि देवदत्तमालिङ्ग्य बलात् स्वकीयस्कन्ध आरोपितवान्। ततश्च नृत्यं कृत्वा। हे ब्रह्मव्रतधराणां धुरीण त्वयापि मय्युपकृतमित्याद्युक्त्वा स्कन्धादुत्तार्य। यत्र यत्र स्वजनगृहद्वारादिषु बभ्राम। तत्र तत्र तयोरुभयोरपि तद्गुणवर्णनमेव करोति। अतो ऽहं ब्रवीमि।

प्रत्यक्षे ऽपि कृते पापे मूर्खः साम्ना प्रशाम्यति।
रथकारः स्वकां भार्यां सजारां शिरसावहत् ॥२०७॥

तत् सर्वथा मूलोत्खाता वयं विनष्टाः स्मः। सुष्ठु खल्विदमुच्यते।

मित्ररूपा हि रिपवः सम्भाव्यन्ते विचक्षणैः।
ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः ॥२०८॥

तथा च। सन्तो ऽप्यर्था विनश्यन्ति देशकालविरोधिनः।
अप्राज्ञान् मन्त्रिणः प्राप्य तमः सूर्योदये यथा ॥२०९॥

ततस्तद्वचो ऽनादृत्य सर्वे ते स्थिरजीविनमुत्क्षिप्य स्वदुर्गमानेतुमारब्धाः। अथानीयमानः स्थिरजीव्याह। देवाद्याकिंचित्करेणैतदवस्थेन किं मयोपसङ्गृहीतेन। यत्कारणमिच्छामि दीप्तं वह्निमनुवेष्टुं। तद

र्हसि मामग्निप्रदानेन समुद्धर्तुं। अथ रक्ताक्षस्तस्यान्तर्गतभावं ज्ञात्वाब्रवीत्। किमर्थमग्निपतनमिच्छसि। सो ऽब्रवीत्। अहं तावद्युष्मदर्थ इमामापदं मेघवर्णेन प्रापितः। तदिच्छामि तेषां वैरयातनार्थमुलूकत्वमिति। तच्च श्रुत्वा राजनीतिकुशलो रक्ताक्षः प्राह। भद्र कुटिलस्त्वं कृतकवचनचतुरश्च। तत् त्वमुलूकयोनिगतो ऽपि स्वकीयामेव वायसयोनिं बहुमन्यसे। श्रूयते चैतदाख्यानकं।

सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिं।
स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥२१०॥

मन्त्रिणः प्रोचुः। कथमेतत्। रक्ताक्षः कथयति। अस्ति विषमशिलतलस्खलिताम्बुनिर्घोषश्रवणसंत्रस्तमत्स्यपरिवर्तनसञ्जनितश्वेतफेनसबलतरङ्गाया गङ्गायास्तटे जपनियमतपःस्वाध्यायोपवासयोगक्रियानुष्ठानपरायणैः परिपूतपरिमितजलजिघृक्षुभिः कन्दमूलफलशैवलाभ्यवहारकदर्थितशरीरैर्वल्कलकृतकौपीनमात्रप्रच्छादनैस्तपस्विभिराकीर्णमाश्रमपदं। तत्र याज्ञवल्क्यो नाम कुलपतिः। तस्य जाह्नव्यां स्नात्वोपस्प्रष्टुमारब्धस्य करतले श्येनमुखात् परिभ्रष्टा मूषिका पतिता। तां दृष्ट्वा न्यग्रोधपत्रे ऽवस्थाप्य। पुनः स्नात्वोपस्पृश्य च। प्रायश्चित्तादिक्रियां कृत्वा च। मूषिकां तां स्वतपोबलेन कन्यकां कृत्वा समादाय स्वाश्रममाशिश्राय। अनपत्यां च जायामाह। भद्रे गृह्यतामियं तव दुहितोत्पन्ना प्रयत्नेन संवर्धनीयेति। ततस्तया संवर्धिता लालिता पालिता च यावत्। द्वादशवर्षा सञ्जज्ञे। अथ विवाहयोग्यां तां दृष्ट्वा भर्तारमेव जायोवाच। भो भर्तः किमिदं नावबुध्यसे यथास्याः स्वदुहितुर्विवाहसमयातिक्रमो भवति। असावाह। साधूक्तं। उक्तं च।

स्त्रियः पूर्वं सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः।
भुञ्जते मानुषाः पश्चात् तस्माद्दोषो न विद्यते ॥२११॥
सोमस्तासां ददौ शौचं गन्धर्वाः शिक्षितां गिरं।

पावकः शर्वमेध्यत्वं तस्मान्निष्कल्मषाः स्त्रियः ॥२१२॥
असम्प्राप्तरजा गौरी प्राप्ते रजसि रोहिणी।
अव्यञ्जना भवेत् कन्या कुचहीना च नग्निका ॥२१३॥
व्यञ्जनैस्तु समुत्पन्नैः सोमो भुङ्क्ते हि कन्यकां।
पयोधराभ्यां गन्धर्वा रजस्यग्निः प्रतिष्ठितः ॥२१४॥
तस्माद्विवाहयेत् कन्यां यावदृतुमती भवेत्।
विवाहश्चाष्टवर्षायाः कन्यायास्तु प्रशस्यते ॥२१५॥
व्यञ्जनं हन्ति वै पूर्वं परं चैव पयोधरौ।
रतिरिष्टांस्तथा लोकान् हन्याच्च पितरं रजः ॥२१६॥
ऋतुमत्यां तु तिष्ठन्त्यां स्वेच्छादानं तु दीयते।
तस्मादुद्वाहयेन्नग्नां मनुः स्वयम्भुवो ऽब्रवीत् ॥२१७॥
पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता।
अविवाह्या तु सा कन्या जघन्या वृषली स्मृता ॥२१८॥
श्रेष्ठेभ्यः सदृशेभ्यश्च जघन्येभ्यो रजस्वला।
पित्रा देया विनिश्चित्य यतो दोषो न विद्यते ॥२१९॥

अतो ऽहमेनां सदृशाय प्रयच्छामि नान्यस्मै। उक्तं च।

ययोरेव समं वित्तं ययोरेव समं कुलं।
तयोर्विवाहः सख्यं च न तु पुष्टविपुष्टयो ॥२२०॥

तथा च।

कुलं च शीलं च सनाथता च विद्या च वित्तं च वपुर्वयश्च।
एतान् गुणान् सप्त विचिन्त्य देया कन्या बुधैः शेषमचिन्तनीयं ॥

तद्यद्यस्या रोचते तदा भगवन्तमादित्यमाहूय तस्मै प्रयच्छामि। सा प्राह। इह को दोषः। क्रियतामेतत्। अथ मुनिना रविराहूतः। वेदमन्त्रामन्त्रणप्रभावात् तत्क्षणादेवाभ्युपगम्यादित्यः प्रोवाच। भगवन् किमहमाहूतः। सो ऽब्रवीत्। एषा मदीया कन्यका तिष्ठति। यद्येषा

त्वां वृणोति तर्ह्युद्वहस्वेति। एवमुक्त्वा स्वदुहितरमुवाच। पुत्रि किं तव रोचत एष भगवान् त्रैलोक्यदीपको भानुः। पुत्रिकाब्रवीत्। तात अतिदहनात्मको ऽयं। नाहमेनमभिलषामि। तदस्मादन्यः प्रकृष्टतरः कश्चिदाहूयतां। अथ तस्यास्तद्वचनं श्रुत्वा मुनिर्भास्करमुवाच। भगवंस्त्वदधिको ऽस्ति कश्चित्। भास्करः प्राह। अस्ति मदप्यधिको मेघो येनाच्छादितो ऽहमदृश्यो भवामि। अथ मुनिना मेघमप्याहूय कन्याभिहिता। पुत्रिके ऽस्मै त्वां प्रयच्छामि। सा प्राह। कृष्णवर्णो ऽयं जडात्मा च। तदस्मादन्यस्य प्रधानस्य कस्यचिन्मां प्रयच्छ। अथ मुनिना मेघो ऽपि पृष्टः। भो भो मेघ त्वदप्यधिको ऽस्ति कश्चित्। मेघेनोक्तं। मत्तो ऽप्यधिको ऽस्ति वायुः। वायुना हतो ऽहं सहस्रधा यामि। तच्छ्रुत्वा मुनिना वायुराहूतः। आह च। पुत्रिके एष वायुस्ते विवाहायोत्तमः प्रतिभाति। साब्रवीत्। तात अतिचपलो ऽयं। तदस्मादप्यधिकः कश्चिदानीयतां। मुनिराह। वायो त्वत्तो ऽप्यधिको ऽस्ति कश्चित्। पवनेनोक्तं। मत्तो ऽप्यधिको ऽस्ति पर्वतो येन संस्तभ्य बलवानप्यहं ध्रिये। अथ मुनिः पर्वतमाहूय कन्यामुवाच। पुत्रिके त्वामस्मै प्रयच्छामि। सा प्राह। तात कठिनात्मको ऽयं स्तब्धश्च। तदन्यस्मै देहि मां। मुनिना पर्वतः पृष्टः। भो पर्वतराज त्वदप्यधिको ऽस्ति कश्चित्। गिरिणोक्तं। मत्तो ऽप्यधिकाः सन्ति मूषिका ये मच्छरीरं बलाद्विदारयन्ति। ततो मुनिर्मूषिकमाहूय तस्या अदर्शयत्। आह च। पुत्रिके त्वामस्मै प्रयच्छामि। एष प्रतिभाति ते मूषराजः। सापि तं दृष्ट्वा स्वजातीय एष इति मन्यमाना पुलकोद्भूषितशरीरोवाच। तात मां मूषिकां कृत्वास्मै प्रयच्छ। येन स्वजातिविहितं गृहधर्ममनुतिष्ठामि। ततः सो ऽपि स्वतपोबलेन तां मूषिकां कृत्वास्मै प्रादात्। अतो ऽहं ब्रवीमि।

सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिं।

स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥२२२॥

अथ रक्ताक्षवचनमनादृत्य तैः स्ववंशविनाशाय स स्वदुर्गमुपनीतः। नीयमानश्चान्तर्लीनिमवहस्य स्थिरजीवी व्यचिन्तयत्।

हन्यतामिति येनोक्तं स्वामिनो हितवादिना।
स एवैको ऽत्र सर्वेषां नीतिशास्त्रार्थतत्त्ववित् ॥२२३॥

तद्यदि तस्य वचनमकरिष्यन्नेते। ततो न स्वल्पो ऽप्यनर्थो ऽभविष्यादेतेषां। अथ दुर्गद्वारं प्राप्यारिमर्दनो ऽब्रवीत्। भो भो हितैषिणो ऽस्य स्थिरजीविनो यथासमीहितं स्थानं प्रयच्छत। तच्च श्रुत्वा स्थिरजीवी व्यचिन्तयत्। मया तावदेतेषां बधोपायश्चिन्तनीयः। स मया मध्यस्थेन न साध्यते। यतो मदीयमिङ्गितादिकं विचारयन्तस्ते ऽपि सावधाना भविष्यन्ति। तद्दुर्गमधिश्रितो ऽभिप्रेतं साधयामि। इति निश्चित्योलूकपतिमाह। देव युक्तमिदं यत् स्वामिना प्रोक्तं। परमहमपि नीतिज्ञस्तेहितश्च। यद्यप्यनुरक्तः शुचिस्तथापि दुर्गमध्य आवासो नार्हः। तदहमत्रैव दुर्गद्वारस्थः प्रत्यहं भवत्पादपद्मरजः पवित्रीकृततनुः सेवां करिष्यामि। तथेति प्रतिपन्ने प्रतिदिनमुलूकपतिसेवकास्ते प्रकाममाहारं कृत्वा उलूकराजदेशात् प्रकृष्टमांसाहारं स्थिरजीविने प्रयच्छन्ति। अथ कतिपयैरेवाहोभिर्मयूर इव स बलवान् संवृत्तः। अथ रक्ताक्षः स्थिरजीविनं पोष्यमाणं दृष्ट्वा सविस्मयो मन्त्रिजनं राजानं च प्रत्याह। अहो मूर्खो ऽयं मन्त्रिजनो भवांश्च। इत्येवमहमवगच्छामि। उक्तं च।

पूर्वं तावदहं मूर्खो द्वितीयः पाशबन्धकः।
ततो राजा च मन्त्री च सर्वं वै मूर्खमण्डलं ॥२२४॥

ते प्राहुः। कथमेतत्। रक्ताक्षः कथयति। अस्ति कस्मिंश्चित् कथा
पर्वतैकदेशे महान् वृक्षः। तत्र च सिन्धुकनामा को ऽपि पक्षी प्रति ॥१३॥
वसति। तस्य पुरीषे सुवर्णमुत्पद्यते। अथ कदाचित् तमुद्दिश्य व्याधः

को ऽपि समाययौ। स च पक्षी तदग्रत एव पुरीषमुत्ससर्ज। अथ पातसमकालमेव तत् सुवर्णीभूतं दृष्ट्वा व्याधो विस्मयमगमत्। अहो मम शिशुकालादारभ्य शकुनिबन्धव्यसनिनो ऽशीतिवर्षाणि समभूवं। न च कदाचिदपि पक्षिपुरीषे सुवर्णं दृष्टं। इति विचिन्त्य तत्र वृक्षे पाशं बबन्ध। अथासावपि पक्षी मूर्खस्तत्रैव विश्वस्तचित्तो यथापूर्वमुपविष्टः। तत्कालमेव पाशेन बद्धः। व्याधस्तु तं पाशादुन्मुच्य पञ्जरके संस्थाप्य निजावासं नीतवान्। अथ चिन्तयामास। किमनेन सापायेन पक्षिणाहं करिष्यामि। यदि कदाचित् को ऽप्यमुमीदृशं ज्ञात्वा राज्ञे निवेदयिष्यति। तन्नूनं प्राणसंशयो मे भवेत्। अतः स्वयमेव पक्षिणं राज्ञे निवेदयामि। इति विचार्य तथैवानुष्ठितवान्। अथ राजापि तं पक्षिणं दृष्ट्वा विकसितनयनवदनकमलः परां तुष्टिमुपागतः। प्राह चैवं। हंहो रक्षापुरुषा एनं पक्षिणं यत्नेन रक्षत। अशनपानादिकं चास्य यथेच्छं प्रयच्छत। अथ मन्त्रिणाभिहितं। किमनेनाश्रद्धेयव्याधवचनप्रत्ययमात्रपरिगृहीतेनाण्डजेन। किं कदाचित् पक्षिपुरीषे सुवर्णं सम्भवति। तन्मुच्यतां पञ्जरबन्धनादयं पक्षी। इति मन्त्रिवचनाद्राज्ञा मोचितो ऽसौ पक्षी। उन्नतद्वारतोरणे समुपविश्य सुवर्णमयीं विष्टां विधाय। पूर्वं तावदहं मूर्ख इति श्लोकं पठित्वा यथासुखमाकाशमार्गेण प्रायात्। अतो ऽहं ब्रवीमि।

पूर्वं तावदहं मूर्खो द्वितीयः पाशबन्धकः।
ततो राजा च मन्त्री च सर्वं वै मूर्खमण्डलं ॥२२५॥

अथ ते पुनरपि प्रतिकूलदैवतया हितमपि रक्ताक्षवचनमनादृत्य भूयस्तं प्रभूतमांसादिविविधाहारेण पोषयामासुः। अथ रक्ताक्षः स्ववर्गमाहूय रहः प्रोवाच। अहो एतावदेवास्मद्भूपतेः कुशलं दुर्गं च। तदुपदिष्टं मया यत् कुलक्रमागतः सचिवो ऽभिधत्ते। तद्वयमन्यत् पर्वतदुर्गं सम्प्रति समाश्रयामः। उक्तं च यतः।

अनागतं यः कुरुते स शोभते स शोच्यते यो न करोत्यनागतं ।
वने ऽत्र संस्थस्य समागता जरा बिलस्य बाणी न कदापि मे श्रुता ॥

ते प्रोचुः। कथमेतत्। रक्ताक्षः कथयति।

कथा ॥१४॥

अस्ति कस्मिंश्चिद्वनोद्देशे खरनखरो नाम सिंहः प्रतिवसति स्म। स कदाचिदितश्चेतश्च परिभ्रमन् क्षुत्क्षामकण्ठो न किञ्चिदपि सत्त्वमाससाद। ततश्चास्तमनसमये महतीं गिरिगुहामासाद्य प्रविष्टश्चिन्तयामास। नूनमेतस्यां गुहायां रात्रौ केनापि सत्त्वेनागन्तव्यं। तन्निभृतो भूत्वा तिष्ठामि। एतस्मिन्नन्तरे तत्स्वामी दधिपुच्छो नाम शृगालः समायातः। स च यावत् पश्यति। तावत् सिंहपदपद्धतिर्गुहायां प्रविष्टा न च निःक्रामणं गता। ततश्चाचिन्तयत्। अहो विनष्टो ऽस्मि। नूनमस्यामन्तर्गतेन सिंहेन भाव्यं। तत् किं करोमि। कथं ज्ञास्यामि। एवं विचिन्त्य द्वारस्थः फूत्कर्तुमारब्धः। अहो बिल अहो बिल। इत्युक्त्वा तूष्णीम्भूय भूयो ऽपि तथैव प्रत्यभाषत। भो किं न स्मरसि यन्मया त्वया सह समयः कृतो ऽस्ति। यन्मया बाह्यात् समागतेन त्वं वक्तव्यः। त्वया चाहमाकारणीय इति। तद्यदि मां नाह्वयसि ततो ऽहं द्वितीयं तदेव बिलं यास्यामि। यत् पश्चान्मामाह्वास्यति। अथ तच्छ्रुत्वा सिंहश्चिन्तितवान्। नूनमेषा गुहास्य समागतस्य सदा समाह्वानं करोति। परमद्य मद्भयान्न किञ्चिद्ब्रूते। अथवा साध्विदमुच्यते।

भयसन्त्रस्तमनसां हस्तपादादिकाः क्रियाः ।
प्रवर्तन्ते न बाणी च वेपथुश्चाधिको भवेत् ॥ २२७ ॥

तदहमस्याह्वानं करोमि येन तदनुसारेण प्रविष्टो ऽयं मे भोज्यतां याति। एवं सम्प्रधार्य सिंहस्तस्याह्वानमकरोत्। अथ सिंहशब्देन सा गुहा प्रतिरवसम्पूर्णान्यानपि दूरस्थानरण्यजीवान् त्रासयामास। शृगालो ऽपि पलायमान इमं श्लोकमपठत्।

अनागतं यः कुरुते स शोभते स शोच्यते यो न करोत्यनागतं ।

वने ऽत्र संस्थस्य समागता जरा बिलस्य वाणी न कदापि मे श्रुता॥

तदेवं मत्वा युष्माभिर्मया सह गन्तव्यमिति। एवमभिधायात्मानुयायि परिवारानुगतो दूरदेशान्तरं रक्ताक्षो जगाम।

अथ रक्ताक्षे गते स्थिरजीव्यतिहृष्टमना व्यचिन्तयत्। अहो कल्याणमस्माकमुपस्थितं यद्रक्ताक्षो गतः। यतः स दीर्घदर्शी। एते च मूढमनसः। ततो मम सुखघात्याः सञ्जाताः। उक्तं च यतः।

न दीर्घदर्शिनो यस्य मन्त्रिणः स्युर्महीपतेः।
क्रमायाता ध्रुवं तस्य न चिरात् स्यात् परिक्षयः॥२२९॥

अथवा साध्विदमुच्यते।

मन्त्रिरूपा हि रिपवः सम्भाव्यन्ते विचक्षणैः।
ये सन्तं नयमुत्सृज्य सेवन्ते प्रतिलोमतः॥२३०॥

एवं विचिन्त्य स्वकुलाय एकैकां वनकाष्ठिकां गुहादीपनार्थं दिने दिने प्रक्षिपति। न च ते मूर्खा उलूका विजानन्ति। यदेष कुलायमस्मद्दाहाय वृद्धिं नयति। अथवा साध्विदमुच्यते।

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च।
शुभं वेत्त्यशुभं पापं भद्रं दैवहतो नरः॥२३१॥

अथ कुलायव्याजेन दुर्गद्वारे कृते काष्ठनिचये सञ्जाते सूर्योदये ऽन्धतां प्राप्तेषूलूकेषु सत्सु स्थिरजीवी शीघ्रं गत्वा मेघवर्णमाह। स्वामिन् दाहसाध्या कृता रिपुगुहा। तत् सपरिवारः समेत्यैकैकां वनकाष्ठिकां ज्वलन्तीं गृहीत्वा गुहाद्वारे ऽस्मत्कुलाये प्रक्षिप। येन सर्वे शत्रवः कुम्भीपाकनरकप्रायेण दुःखेन म्रियन्ते। तच्छ्रुत्वा प्रहृष्टो मेघवर्ण आह। तात कथयात्मवृत्तान्तं। चिरादद्य दृष्टो ऽसि। स आह। वत्स नायं वक्तव्यस्य कालः। यतः कदाचित् तस्य रिपोः कश्चित्प्रणिधिर्ममेहागमनं निवेदयिष्यति। तज्ज्ञानादन्धो ऽन्यत्रापसरणं करिष्यति। तत् त्वर्यतां। उक्तं च।

शीघ्रकृत्येषु कार्येषु विलम्बयति यो नरः ।
तत् कृत्यं देवतास्तस्य कोपाद्विघ्नन्त्यसंशयं ॥२३२॥

तथा च। यस्य यस्य हि कार्यस्य फलितस्य विशेषतः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तत्फलं ॥२३३॥

तद्गुहायातस्ते हतशत्रोः सर्वं सविस्तरं निर्व्याकुलतया कथयिष्यामि। अथासौ तद्वचनमाकर्ण्य सपरिजन एकैकां ज्वलन्तीं वनकाष्ठिकां चञ्चग्रेण गृहीत्वा तद्गुहाद्वारं प्राप्य स्थिरजीविकुलाये प्राक्षिपत्। ततः सर्वे ते दिवान्धा रक्ताक्षवाक्यानि स्मरन्तो द्वारस्यावृतत्वादनिःसरन्तो गुहामध्ये कुम्भीपाकन्यायमापन्ना मृताश्च। एवं शत्रून् निःशेषतां नीत्वा भूयो ऽपि मेघवर्णस्तदेव न्यग्रोधपादपदुर्गं जगाम। ततः सिंहासनस्थो भूत्वा सभामध्ये प्रमुदितमनाः स्थिरजीविनमपृच्छत्। तात कथं त्वया शत्रुमध्ये गतेनैतावत् कालो नीतः। तदत्र कौतुकमस्माकं वर्तते। तत् कथ्यतां। यतः

वरमग्नौ प्रदीप्ते तु प्रपातः पुण्यकर्मणां ।
न चारिजनसंसर्गो मुहूर्तमपि सेवितः ॥२३४॥

तदाकर्ण्य स्थिरजीव्याह। भद्र आगामिफलवाञ्छया कष्टमपि सेवको न जानाति। उक्तं च यतः।

उपनतभये यो यो मार्गो हितार्थकरो भवेत् ।
स स निपुणया बुद्ध्या सेव्यो महान् कृपणो ऽपि वा ।
करिकरनिभौ ज्याघाताङ्कौ महार्थविशारदौ ।
रचितवलयैः स्त्रीवद्बद्धौ करौ हि किरीटिना ॥२३५॥

शक्तेनापि सदा नरेन्द्रविदुषा कालान्तरापेक्षिणा ।
वास्तव्यं खलु वाक्यवज्रविषमे क्षुद्रे ऽपि पापे जने ।
दर्वीव्यग्रकरेण धूम्रमलिनेनायासयुक्तेन च ।
भीमेनातिबलेन मत्स्यभवने किं नोषितं सूदवत् ॥२३६॥

यद्वा तद्वा विषमपतितं साधु वा गर्हितं वा ।
कालापेक्षी हृदयनिहितं बुद्धिमान् कर्म कुर्यात् ।
किं गाण्डीवस्फुरगुरुघनास्फालनक्रूरपाणिर् ।
नासील्लीलानटनविलसन् मेखली सव्यसाची ॥२३७॥
सिद्धिं प्रार्थयता जनेन विदुषा तेजो निगृह्य स्वकं ।
सत्त्वोत्साहवतापि दैवविधिषु स्थैर्यं प्रकार्यं क्रमात् ।
देवेन्द्रद्रविणेश्वरान्तकसमैरप्यन्वितो भ्रातृभिः ।
किं क्लिष्टः सुचिरं त्रिदण्डमवहच्छ्रीमान्न धर्मात्मजः ॥२३८॥
रूपाभिजनसम्पन्नौ कुन्तीपुत्रौ बलान्वितौ ।
गोकर्मरक्षाव्यापारे विराटप्रेष्यतां गतौ ॥२३९॥
रूपेणाप्रतिमेन यौवनगुणैः श्रेष्ठे कुले जन्मना ।
कान्त्या श्रीरिव यात्र सापि विदिशां कालक्रमादागता ।
सैरन्ध्रीति सगर्वितं युवतिभिः साक्षेपमाज्ञातया ।
द्रौपद्या ननु मत्स्यराजभवने घृष्टं न किं चन्दनं ॥२४०॥

मेघवर्ण आह । तात असिधाराव्रतमिदं मन्ये यदरिणा सह संवासः । सो ऽब्रवीत् । देव एवमेतत् । परं न तादृग्मूर्खसमागमः क्वापि मया दृष्टः । न च महाप्राज्ञमनेकशास्त्रेष्वप्रतिमबुद्धिं रक्ताक्षं विना धीमान् । यत्कारणं तेन मदीयं यथावस्थितं चित्तं ज्ञातं । ये पुनरन्ये मन्त्रिणस्ते महामूर्खा मन्त्रिमात्रव्यपदेशोपजीविनो ऽतत्त्वकुशला यैरिदमपि न ज्ञातं । यतः

अरितो ऽभ्यागतो भृत्यो दुष्टस्तत्सङ्गतत्परः ।
अपसर्प्य स धर्मवान्नित्योद्वेगी च दूषितः ॥२४१॥
आसने शयने याने पानभोजनवस्तुषु ।
दृष्टादृष्टप्रमत्तेषु प्रहरन्त्यरयो ऽरिषु ॥२४२॥
तस्मात् सर्वप्रयत्नेन त्रिवर्गनिलयं बुद्धः ।

आत्मानमादृतो रक्षेत् प्रमादाद्धि विनश्यति ॥२४३॥

साधु चेदमुच्यते

सन्तापयन्ति कमपथ्यभुजं न रोगाः।
दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः।
कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः।
कं स्वीकृता न विषयाः परिपीडयन्ति ॥२४४॥

लुब्धस्य नश्यति यशः पिशुनस्य मैत्री।
नष्टक्रियस्य कुलमर्थपरस्य धर्मः।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं।
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥२४५॥

तद्राजन्नसिधाराव्रतं मयाचरितमरिसंसर्गादिति। यद्भवतोक्तं तन्मया साक्षादेवानुभूतं। उक्तं च।

अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः।
स्वार्थमभ्युद्धरेत् प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥२४६॥
स्कन्धेनापि वहेच्छत्रुं कालमासाद्य बुद्धिमान्।
महता कृष्णसर्पेण मण्डूका बहवो हताः ॥२४७॥

मेघवर्ण आह। कथमेतत्। स्थिरजीवी कथयति। अस्ति वरुणा कथा द्रिसमीप एकस्मिन् प्रदेशे परिणतवया मन्दविषो नाम कृष्णसर्पः। ॥१५॥ स एवं चित्ते सञ्चिन्तितवान्। कथं नाम मया सुखोपायवृत्त्या वर्तितव्यमिति। ततो बहुमण्डूकं ह्रदमुपगम्य धृतिपरीतमिवात्मानं दर्शितवान्। अथ तथा स्थिते तस्मिन्नुदकप्रान्तगतेनैकेन मण्डूकेन पृष्टः। माम किमद्य यथापूर्वमाहारार्थं न विहरसि। सो ऽब्रवीत्। भद्र कुतो मे मन्दभाग्यस्याहाराभिलाषः। यत्कारणमद्य रात्रौ प्रदोष एव मयाहारार्थं विहरमानेन दृष्ट एको मण्डूकः। तद्ग्रहणार्थं मया क्रमः सज्जितः। सो ऽपि मां दृष्ट्वा मृत्युभयेन स्वाध्यायप्रसक्तानां ब्राह्मणा

नामान्तरमपक्रान्तो न विभावितो मया क्वापि गतः। तत्सदृशमोहितचित्तेन मया कस्यचिद्ब्राह्मणस्य सूनो हरिकनामा ह्रदतटजलान्तस्थो ऽङ्गुष्ठे दष्टः। ततो ऽसौ सपदि पञ्चत्वमुपागतः। अथ तस्य पित्रा दुःखितेनाहं शप्तः। यथा दुरात्मन् त्वया निरपराधो मत्सुतो दष्टः। तदनेन दोषेण त्वं मण्डूकानां वाहनं भविष्यसि। तत्प्रसादलब्धजीविकया वर्तिष्यस इति। ततो ऽहं युष्माकं वाहनार्थमाजगाम। तेन च सर्वमण्डूकानामिदमावेदितं। ततस्तैः प्रहृष्टमनोभिः सर्वैरेव गत्वा जलपादनाम्नो दर्दुरराजस्य विज्ञप्तं। अथासावपि मन्त्रिपरिवृतो ऽत्यद्भुतमिदमिति मन्यमानः ससम्भ्रमं ह्रदादुत्तीर्य मन्दविषस्य फणिनः फणाप्रदेशमधिरूढः। शेषा अपि यथाज्येष्ठं तत्पृष्ठोपरि समारुरुहुः। किं बहुना तदुपरि स्थानमप्राप्नुवन्तस्तस्यानुपदं धावन्ति। मन्दविषो ऽप्यात्मतुष्ट्यर्थमनेकप्रकारगतिविशेषानदर्शयत्। अथ जलपादो लब्धतदङ्गसंस्पर्शसुखस्तमाह।

न तथा करिणा यानं तुरगेण रथेन वा।
नरयाणेन वा यानं यथा मन्दविषेण मे॥२४८॥

अथान्येद्युर्मन्दविषश्छद्मना मन्दं मन्दं विसर्पति। तच्च दृष्ट्वा जलपादो ऽब्रवीत्। भद्र मन्दविष यथापूर्वं किमद्य साधु नोह्यते। मन्दविषो ऽब्रवीत्। देवाद्याहारवैकल्यान्न मे वोढुं शक्तिरस्ति। अथासावब्रवीत्। भद्र भक्षय क्षुद्रमण्डूकान्। तच्छ्रुत्वा प्रहर्षितसर्वगात्रो मन्दविषः ससम्भ्रममब्रवीत्। ममायमेव विप्रशापो ऽस्ति। तत तवानेनानुज्ञावचनेन प्रीणितो ऽस्मि। ततो ऽसौ नैरन्तर्येण मण्डूकान् भक्षयन् कतिपयैरेवाहोभिर्बलवान् संवृत्तः। प्रहृष्टश्चान्तर्लीनिमवहस्येदमब्रवीत्।

मण्डूका विविधा ह्येते छलपूर्वोपसाधिताः।
कियन्तं कालमक्षीणा भवेयुः खादिता मम॥२४९॥

जलपादो ऽपि मन्दविषेण कृतकवचनव्यामोहितचित्तः किमपि नावबुध्यते। अत्रान्तरे ऽन्यो महाकायः कृष्णसर्पस्तमुद्देशं समायातः। तं च मण्डूकैर्वाह्यमानं दृष्ट्वा विस्मयमगमत्। आह च। वयस्य यदस्माकमशनं तैर्वाह्यसे। विरुद्धमेतत्। मन्दविषो ऽब्रवीत्।

सर्वमेतद्विजानामि यथा वाह्यो ऽस्मि दर्दुरैः।
किंचित् कालं प्रतीक्ष्यो ऽहं घृतान्धो ब्राह्मणो यथा ॥२५०॥

कथा ॥१६॥

सो ऽब्रवीत्। कथमेतत्। मन्दविषः कथयति। अस्ति कस्मिंश्चिदधिष्ठाने यज्ञदत्तो नाम ब्राह्मणः। तस्य भार्या पुंश्चल्यन्यासक्तमना अजस्रं विधाय सखण्डघृतां घृतपूरान् कृत्वा भर्तुश्चौरिकया प्रयच्छति। अथ कदाचिद्भर्त्रा दृष्टोक्ता च। भद्रे किमेतत् परिपच्यते। कुत्र वाजस्रं नयसीदं। कथय सत्यं। सा चोत्पन्नप्रतिभा कृतकवचनैर्भर्तारमब्रवीत्। अस्त्यत्र नातिदूरे भगवत्या देव्या आयतनं। तत्राहमुपोषिता सती बलिं भक्ष्यविशेषांश्चापूर्वान् नयामि। अथ तस्य पश्यतो गृहीत्वा तत् सकलं देव्यायतनाभिमुखी प्रतस्थे। यत्कारणं देव्या निवेदितेनानेन मदीयो भर्तैवं मंस्यते। यन्मम ब्राह्मणी भगवत्याः कृते भक्ष्यविशेषान् नित्यमेव नयतीति। अथ देव्यायतने गत्वा स्नानार्थं नद्यामवतीर्य यावत् स्नानक्रियां करोति। तावद्भर्तान्यमार्गान्तरेणागत्य देव्याः पृष्ठतो ऽदृश्यो ऽवतस्थे। अथ सा ब्राह्मणी स्नात्वा देव्यायतनमागत्य स्नानानुलेपनमाल्यधूपबलिक्रियादिकं कृत्वा देवीं प्रणम्य व्यजिज्ञपत्। भगवति केन प्रकारेण मम भर्तान्धो भविष्यति। तच्छ्रुत्वा स्वरभेदेन देवीपृष्ठस्थितो ब्राह्मणो जगाद। यदि त्वमजस्रं घृतपूरादिभक्ष्यं तस्मै भर्त्रे प्रयच्छसि। ततः शीघ्रमन्धो भविष्यति। सा तु बन्धकी कृतकवचनवञ्चितमानसा तस्मै ब्राह्मणाय तदेव नित्यं प्रददौ। अथान्येद्युर्ब्राह्मणेनाभिहितं। भद्रे नाहं सुतरां पश्यामि। तच्छ्रुत्वा चिन्तितमनया। देव्या प्रसादो ऽयं प्राप्त इति। अथ तस्या हृदयवल्लभो विटस्त

त्सकाशमन्धीभूतो ऽयं ब्राह्मणः किं मम करिष्यतीति निःशङ्कः प्रतिदिनमभ्येति। अथान्येद्युस्तं प्रविशन्तमभ्यासगतं दृष्ट्वा केशैर्गृहीत्वा लगुडपार्ष्णिप्रभृतिप्रहारैस्तावदताडयत्। यावदसौ पञ्चत्वमाप। तामपि दुष्टपत्नीं छिन्ननासिकां कृत्वा विससर्ज। अतो ऽहं ब्रवीमि।

सर्वमेतद्विजानामि यथा वाह्यो ऽस्मि दर्दुरैः।
किञ्चित् कालं प्रतीक्ष्यो ऽहं घृतान्धो ब्राह्मणो यथा ॥२५१॥

अथ मन्दविषो ऽन्तर्लीनमवहस्य पुनरपि मण्डूका विविधास्वादा इति तदेवाब्रवीत्। अथ जलपादस्तच्छ्रुत्वा सुतरां व्यग्रहृदयः किमनेनाभिहितमिति तमपृच्छत्। भद्र किं त्वयाभिहितं। इदं विरुद्धं वच। अथासावात्माकारप्रच्छादनार्थं न किञ्चिदित्यब्रवीत्। तथैव कृतकवचनव्यामोहितचित्तो जलपादस्तस्य दुष्टाभिसन्धिं नाववुध्यते। किं बहुना तथा तेन सर्वे ऽपि भक्षिता यथा वीजमात्रमपि नावशिष्टं। अतो ऽहं ब्रवीमि।

स्कन्धेनापि वहेच्छत्रुं कालमासाद्य बुद्धिमान्।
महता कृष्णसर्पेण मण्डूका बहवो हताः ॥२५२॥

अथ राजन् यथा मन्दविषेण बुद्धिबलेन मण्डूका निहताः। तथा मयापि सर्वे ऽपि वैरिण इति। साधु चेदमुच्यते।

वने प्रज्वलितो वह्निर्दहन् मूलानि रक्षति।
स मूलोन्मूलनं कुर्याद्वायुर्यो मृदुशीतलः ॥२५३॥

मेघवर्ण आह। तात सत्यमेवैतत्। ये महात्मानो भवन्ति ते महासत्त्वा आपद्गता अपि प्रारब्धं न त्यजन्ति। उक्तं च यतः।

महत्त्वमेतन्महतां नयालङ्कारधारिणां।
न मुञ्चन्ति यदारब्धं कृच्छ्रे ऽपि व्यसनोदये ॥२५४॥

तथा च। प्रारभ्यते न खलु विघ्नभयेन नीचैः।
प्रारभ्य विघ्नविहता विरमन्ति मध्याः।

विघ्नैः सहस्रगुणितैरपि हन्यमानाः ।
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ २५५ ॥

तत् कृतं निःकण्टकं मम राज्यं शत्रून् निःशेषतां नयता त्वया। अथवा युक्तमेतन्नयवेदिनां। उक्तं च यतः।

ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च ।
व्याधिशेषं च निःशेषं कृत्वा प्राज्ञो न सीदति ॥ २५६ ॥

सो ऽब्रवीत्। देव भाग्यवांस्त्वमेवासि यस्यारब्धं सर्वमेव संसिध्यति। तत्र केवलं शौर्यं कृत्यं साधयति। किन्तु प्रज्ञया यत् क्रियते तदेव विजयाय भवति। उक्तं च।

शस्त्रैर्हता न हि हता रिपवो भवन्ति ।
प्रज्ञाहतास्तु रिपवः सुहता भवन्ति ।
शस्त्रं निहन्ति पुरुषस्य शरीरमेकं ।
प्रज्ञा कुलं च विभवं च यशश्च हन्ति ॥ २५७ ॥

तदेवं प्रज्ञापुरुषकाराभ्यां युक्तस्यायत्नेन कार्यसिद्धयः सम्भवन्ति।

प्रसरति मतिः कार्यारम्भे दृढी भवति स्मृतिः ।
स्वयमुपनयन्नर्थान् मन्त्रो न गच्छति विप्लवं ।
स्फुरति सफलस्तर्कश्चित्तं समुन्नतिमश्नुते ।
भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥ २५८ ॥

तथा च नयत्यागशौर्यसम्पन्ने पुरुषे राज्यमिति। उक्तं च।

त्यागिनि शूरे विदुषि च संसर्गरुचिर्जनो गुणी भवति ।
गुणवति धनं धनाच्छ्रीः श्रीमत्याज्ञा ततो राज्यं ॥ २५९ ॥

मेघवर्णो ऽप्याह। नूनं सद्यःफलानि नीतिशास्त्राणि यत् त्वयानुकृत्ये नानुंप्रविश्यारिमर्दनः सपरिजनो निशेषितः। स्थिरजीव्याह।

तीक्ष्णोपायप्राप्तिगम्यो ऽपि यो ऽर्थस्तस्याप्यादौ संश्रयः साधुयुक्तः ।
उत्तुङ्गाग्रः सारभूतो वनानां नान्यभ्यर्च्यश्छिद्यते पादपेन्द्रः ॥ २६० ॥

अथवा स्वामिन् किं तेनाभिहितेन यदनन्तरकाले क्रियारहितमसुखसाध्यं वा भवति। साधु चेदमुच्यते।

अनिश्चितैरध्यवसायभीरुभिः पदे पदे दोषशतानुदर्शिभिः।
फलैर्विसंवादमुपागता गिरः प्रयान्ति लोके परिहासवस्तुतां॥२६१॥

न च लघुष्वपि कर्तव्येषु धीमद्भिरनादरः कार्यः। यतः

शक्यामि कर्तुमिदमल्पमयत्नसाध्यं।
अत्रादरः क इति कृत्यमुपेक्षमाणाः।
केचित् प्रमत्तमनसः परितापदुःखं।
आपत्प्रसङ्गसुलभं पुरुषाः प्रयान्ति॥२६२॥

तदद्य जितारेर्मद्विभोर्यथापूर्वं निद्रालाभो भविष्यति। उच्यते चैतत्।

निःसर्पे बद्धसर्पे वा भवने सुप्यते सुखं।
सदा दृष्टभुजङ्गे तु निद्रा दुःखेन लभ्यते॥२६३॥

तथा च।

विस्तीर्णव्यवसायसाध्यमहतां स्निग्धोपभुक्ताशिषां।
कार्याणां नयसाहसोन्नतिमतामिच्छापदारोहिणां।
मानोत्सेकपराक्रमव्यसनिनः पारं न यावद्गता।
सामर्षे हृदये ऽवकाशविषया तावत् कथं निर्वृतिः॥२६४॥

तदवसितकार्यारम्भस्य विश्राम्यतीव मे हृदयं। तदिदमधुना निहतकण्टकं राज्यं प्रजापालनतत्परो भूत्वा पुत्रपौत्रादिक्रमेणाचलछत्रासनश्रीश्चिरं भुंक्ष्व। अपि च।

प्रजा न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः।
अजागलस्तनस्येव तस्य राज्यं निरर्थकं॥२६५॥

गुणेषु रागो व्यसनेष्वनादरो रतिः सुभृत्येषु च यस्य भूपतेः।
चिरं स भुङ्क्ते चलचामरांशुकां सितातपत्राभरणां नृपश्रियं॥२६६॥

न च त्वया प्राप्तराज्यो ऽहमिति मत्वा श्रीमदेनात्मा व्यंसयितव्यः।

यत्कारणं चला हि राज्ञा विभूतयः । वंशारोहणवद्राज्यलक्ष्मीर्दुरारोहा । क्षणविनिपातरता प्रयत्नशतैरपि धार्यमाणा दुर्धरा । प्रशस्ताराधिताप्यन्ते विप्रलम्भिनी । वानरजातिरिव विद्रुतानेकचित्ता । पद्मपत्रोदकमिवाघटितसंश्लेषा । पवनगतिरिवातिचपला । अनार्यसङ्गतमिवास्थिरा । आशीविष इव दुरुपचारा । सन्ध्याभ्रलेखेव मुहूर्तरागा । जलबुद्बुदालीव स्वभावभङ्गुरा । शरीरप्रकृतिरिव कृतघ्ना । स्वप्नलब्धद्रव्यराशिरिव क्षणदृष्टनष्टा । अपि च ।

यदैव राज्ये क्रियतेऽभिषेकस्तदैव बुद्धिव्यसनेषु योज्या ।
घटा हि राज्ञामभिषेककाले सहाम्भसैवापदमुद्गिरन्ति ॥२६७॥

न च कश्चिदनधिगमनीयो नामास्त्यापदां । उक्तं च ।

रामस्य व्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं ।
वृष्णीनां निधनं नलस्य नृपते राज्यात् परिभ्रंशनं ।
नाट्याचार्यकमर्जुनस्य पतनं सञ्चिन्त्य लङ्केश्वरे ।
सर्वं कालवशाज्जनोऽत्र सहते कः कं परित्रायते ॥२६८॥
क्व स दशरथः स्वर्गे भूत्वा महेन्द्रसुहृद्गतः ।
क्व स जलनिधेर्वेलां बद्ध्वा नृपः सगरस्तथा ।
क्व स करतलाज्जातो वैण्यः क्व सूर्यतनुर्मनुः ।
ननु बलवता कालेनैते प्रबुध्य निमीलिताः ॥२६९॥
मान्धाता क्व गतस्त्रिलोकविजयी राजा क्व सत्यव्रतः ।
देवानां नृपतिर्गतः क्व नहुषः सच्छास्त्रवान् केशवः ।
मन्यन्ते सरथाः सकुञ्जरवराः शक्रासनाध्यासिनः ।
कालेनैव महात्मना त्वनुकृता कालेन निर्वासिताः ॥२७०॥

अपि च ।

स च नृपतिस्ते सचिवास्ताः प्रमदास्तानि काननवनानि ।
स च ते च ताश्च तानि च कृतान्तदृष्टानि नष्टानि ॥२७१॥

एवं मत्तकरिकर्णचञ्चलां राज्यलक्ष्मीमवाप्य न्यायैकनिष्ठो भूत्वोपभुंक्ते।

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके
काकोलूकीयं नाम तृतीयं तन्त्रं
समाप्तं

---

अथेदमारभ्यते लब्धप्रणाशो नाम चतुर्थं तन्त्रं। तस्यायमाद्यः श्लोकः।

प्राप्तमर्थं तु यो मोहात् सान्त्वनैः प्रतिमुञ्चति।
स तथा वञ्चितो मूढो मकरः कपिना यथा॥१॥

तद्यथानुश्रूयते। अस्ति कस्मिंश्चित् समुद्रोपकण्ठे महान् जम्बूपादपः सदाफलः। तत्र च रक्तमुखो नाम वानरः प्रतिवसति स्म। अथ तस्य तरोरधस्तात् कदाचिद्विकरालमुखो नाम मकरः समुद्रसलिलान्निष्क्रम्य सुकोमलवालुकासनाथे तीरोपान्ते न्यविशत्। ततश्च रक्तमुखेन स प्रोक्तः। भो भवान् समभ्यागतो ऽतिथिः। तद्भक्षयतु मया दत्तान्यमृततुल्यानि जम्बूफलानि। उक्तं च।

प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा।
वैश्वदेवान्तमापन्नः सो ऽतिथिः स्वर्गसङ्क्रमः॥२॥
न पृच्छेच्चरणं गोत्रं न च विद्यां कुलं न च।
अतिथिं वैश्वदेवान्ते श्राद्धे च मनुरब्रवीत्॥३॥
दूरमार्गश्रमश्रान्तं वैश्वदेवान्तमागतं।
अतिथिं पूजयेद्यस्तु स याति परमां गतिं॥४॥
अपूजितो ऽतिथिर्यस्य गृहाद्याति विनिश्वसन्।
गच्छन्ति विमुखास्तस्य पितृभिः सह देवताः॥५॥

एवमुक्त्वा तस्मै जम्बूफलानि प्रददौ। सो ऽपि तानि भक्षयित्वानेन सह चिरं गोष्ठीसुखमनुभूय भूयो ऽपि स्वभवनमगात्। एवं नित्यमेव

तौ वानरमकरौ जम्बूछायाश्रितौ विविधसाधुगोष्ठ्या कालं नयन्तौ सुखेन तिष्ठतः। सो ऽपि मकरो भक्षितशेषाणि जम्बूफलानि गृहं गत्वा स्वपत्न्याः प्रयच्छति। अथ तयान्यस्मिन्नहनि स पृष्टः। नाथ क्वैवंविधान्यमृतकल्पानि नित्यं प्राप्नोषि। सो ऽब्रवीत्। भद्रे ममास्ति प्रियसुहृद्रक्तमुखो नाम वानरः। स प्रीतिपूर्वमिमानि फलानि प्रयच्छति। अथ तयाभिहितं। यः सदैवामृतप्रायाणीदृशानि फलानि भक्षयति। तस्य हृदयममृतमयं भविष्यति। तद्यदि मया भार्यया ते प्रयोजनं। ततस्तस्य हृदयं मम प्रयच्छ। येन तद्भक्षयित्वा जरामरणरहिता त्वया सह भोगान् भुनज्मि। स आह। भद्रे मा मैवं वद। यतः स प्रतिपन्नो ऽस्माकं भ्राता। अपरं फलदाता ततो व्यापादयितुं न शक्यते। तत् त्यजैनं मिथ्याग्रहं। उक्तं च।

एका प्रसूयते माता द्वितीया वाक् प्रसूयते।
वाग्जातमधिकं प्रोचुः सोदर्यादपि बन्धुवत् ॥६॥

अथ मकरी प्राह। त्वया कदाचिदपि मम वचनं नान्यथा कृतं। तन्नूनमेषा वानरी भविष्यति। यतस्तस्या अनुरागतस्त्वं सकलमपि दिनं तत्र गमयसि। तत् त्वं ज्ञातः मया सम्यक्। उक्तं च यतः।

साह्लादं वचनं प्रयच्छसि न मे नो वाञ्छितं याचितः।
प्रायः प्रोच्छ्वसिषि द्रुतं हुतवहज्वालासमं रात्रिषु।
कण्ठाश्लेषपरिग्रहे शितिलता यन्नादराच्चुम्बसे।
तत् ते धूर्त हृदिस्थिता प्रियतमा काचिन्ममैवापरा ॥७॥

सो ऽपि पत्न्याः पादोपसङ्ग्रहं कृत्वा सदीनमुवाच।

मयि ते पादपतिते किङ्करत्वमुपागते।
त्वं प्राणवल्लभे ऽकस्मात् कोपने कोपमेष्यसि ॥८॥

सापि तद्वचनमाकर्ण्याश्रुप्लुतमुखी तमुवाच।

सार्धं मनोरथशतैस्तव धूर्त कान्ता।

सैव स्थिता मनसि कृत्रिमभावरम्या ।
अस्माकमस्ति न कथञ्चिदिहावकाशः ।
तस्मात् कृतं चरणपातविडम्बनाभिः ॥ ९ ॥

अपरं सा यदि ते वल्लभा न भवति । तत् किं मया प्रोक्तो ऽपि तां न व्यापदयसि । अथ स यदि मर्कटः । तत् कस्तेन सह तव स्नेहः । तत् किं बहुना । यदि तस्य हृदयं न भक्षयामि । तदा तवोपरि प्रायोपवेशनं कृत्वा प्राणांस्त्यक्ष्यामि । एवं तस्यास्तन्निश्चयं ज्ञात्वा चिन्ताव्याकुलितहृदयः स प्रोवाच । अहो साध्विदमुच्यते ।

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च ।
एको ग्रहस्तु मीनानां नीलमद्यपयोस्तथा ॥ १० ॥

तत् किं करोमि । कथं स मे बध्यो भवति । इति विचिन्त्य वानरपार्श्वमगमत् । वानरो ऽपि चिरायान्तं सोद्वेगमवलोक्य प्रोवाच । भो मित्र किमद्य चिरवेलया समायातो ऽसि । कस्मात् साह्लादं नालपयसि । न च सुभाषितानि पठसि । स आह । मित्र अद्याहं तव भ्रातृजायया निष्ठुरतरैर्वचनैरभिहितः । भो कृतघ्न मा मे त्वं स्वमुखं दर्शय । यतस्त्वं प्रतिदिनं मित्रमुपजीवसि । न च तस्य पुनः स्वगृहद्वारदर्शनेनापि प्रत्युपकारं करोषि । तत् ते प्रायश्चित्तमपि नास्ति । उक्तं च । ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ११ ॥

तत् त्वं मम देवरं गृहीत्वाद्य प्रत्युपकारार्थं गृहमानय । नो चेत् त्वया सह परलोके मे दर्शनं । तदहं तयैव प्रोक्तस्तव सकाशमागतः । तदद्य तया सह त्वदर्थे कलहायतो ममेयती वेला विलग्ना । तदागच्छ मे गृहं । तव भ्रातृपत्नी रचितचतुष्कप्रगुणितवस्त्रमणिमाणिक्याद्युचिताभरणा द्वारदेशबद्धवन्दनमालिका सोत्कण्ठा तिष्ठति । मर्कट आह । भो मित्र युक्तमभिहितं मद्भ्रातृपत्न्या । उक्तं च यतः ।